उपलम्भनमुपलम्भः ॥ १ ॥ अनुभवनमनुभवः ॥ २ ॥

प्रतिलम्भस्तु लम्भनम् ।

प्रतिलम्भन प्रतिलम्भ ॥ १ ॥ लभ्यते लम्भनम् ॥ २ ॥

नियोगे विधिसंप्रैषौ

नियोजन नियोगस्तत्र ॥ १ ॥ विधीयते विधिः पुलिङ्गः ॥ २ ॥ सम्प्रेषण सम्प्रैष. ॥ ३ ॥

विनियोगोऽर्पणं फले ॥ १५६ ॥

विनियोजन विनियोग., फलविषयमर्पणम् ॥ १ ॥ १५६ ॥

लवोऽभिलावो लवनम्

लवनं लवः ॥ १ ॥ अभिलवनमभिलावः, "निरभेः पूल्व" ॥ ५ । ३ । २१ ॥ इति घञ् ॥ २ ॥ लूयते लवनम् ॥ ३ ॥

निष्पावः पवन पवः ।

निष्पवनं निष्पावः "निरभेः पूल्वः" ॥ ५ । ३ । २१ ॥ इति घञ् ॥ १ ॥ पूयते पवनं धान्यादेर्निर्बुसीकरणम् ॥ २ ॥ अलि पव. ॥ ३ ॥

निष्ठेवष्ठीवनष्ठ्यूतष्ठेवनानि तु थूत्कृते ॥ १५७ ॥

निष्ठीवनं निष्ठेव पुक्लीबलिङ्गः ॥ १ ॥ ष्ठीव्यते ष्ठीवनम्, "ष्ठिवुक्लमुचमां शिति" ॥ ७ । ३ । ७५ ॥ इति दीर्घत्वम् ॥ २ ॥ भावे क्ते ष्ठ्यूतम्, ॥ ३ ॥ "लघोरुपान्त्यस्य" ॥ ४ । ३ । ४ ॥ इति गुणे ष्ठेवनम् ॥४॥ थूत्करण थूत्कृतम्. तत्र ॥५॥१५७॥

निवृत्ति स्यादुपरमो व्यवोपाङ्भ्य. परा रतिः ।

निवर्त्तन निवृत्तिः ॥ १ ॥ उपरमणमुपरम "उद्यमोपरमौ" ॥ ४ । ३ । ५७ ॥ इात वृद्धेरभाव ॥ २ ॥ व्यवोपाङ्भ्य परा रति , विरमणं विरतिः ॥ ३ ॥ एवमवरति. ॥ ४ ॥ उपरति ॥ ५ ॥ आरति ॥ ६ ॥

विधूनन विधुवनं

धूगो ण्यन्तात् "धूग्प्रीगोः" ॥ ४ । २ । १८ ॥ इति अनटि विधूननम् ॥१॥ 'धूत् विधूनने' विधूयते विधुवनम् कुटादित्वाद् गुणाभावः ॥ २ ॥

रिङ्खणं स्खलन समे ॥ १५८ ॥

'रिखु गतौ' रिङ्ख्यते रिङ्खणम् ॥ १ ॥ स्खल्यते स्खलनम् ॥ २ ॥ १५८ ॥

रक्षणत्राणे

रक्षण रक्षणः, "यजिस्वपि-" ॥ ५ । ३ । ८५ ॥ इति नः ॥ १ ॥ त्रायते त्राणम्, अनट् तत्र ॥ २ ॥

ग्रहो ग्राहे

ग्रहण ग्रहः, "युवर्ण-" ॥ ५ । ३ । २८ ॥ इत्यल् ॥ १ ॥ बाहुलकाद् घञि ग्राहस्तत्र ॥ २ ॥

व्यधो वेधे

व्यधन व्यधः "व्यधजप-" ॥ ५ । ३ । ४७ ॥ इत्यल् ॥ १ ॥ विधत् विधाने' इत्यनेकार्थत्वात् व्यधने वर्त्तते, वेधनं वेधस्तत्र ॥ २ ॥

क्षये क्षिया ।

क्षयणं क्षयस्तत्र ॥ १ ॥ 'क्षिपूश् हिंसायाम्' क्षयणं क्षिया षित्वादङ् ॥ २ ॥

स्फरणं स्फुरणे

'स्फरत् स्फुरणे' स्फर्यते स्फरणम् ॥ १ ॥ स्फूर्त्तिः स्फुरणं तत्र ॥ २ ॥

ज्यानिर्जीर्णौ

ज्यानं ज्यानिः "ग्लाहाज्यः" ॥ ५ । ३ । ११८ ॥ इत्यनिः ॥ १ ॥ जरणं जीर्णिस्तत्र "ऋल्वादेरेषां तो नोऽप्र" ॥ ४ । २ । ६८ ॥ इति क्तेर्नत्वम् ॥ २ ॥

अथ वरो वृतौ ॥ १५९ ॥

वरण वर "युवर्ण-" ॥ ५ । ३ । २८ ॥ इति भावेऽल्, व्रियतेऽसाविति कर्मणि वा । यत् कात्यः-"तपोभिरिष्यते यस्तु देवेभ्य स वरो मत." ॥ १ ॥ वरणं वृतिस्तत्र ॥ २ ॥ १५९ ॥

समुच्चयः समाहारः

समुच्चयनं समुच्चय ॥ १ ॥ समाहरणं समाहारः, अनेकस्य एकत्र अध्यावापः ॥ २ ॥

अपहारापचयौ समौ ।

अपहरणमपहारः ॥ १ ॥ अपचयनमपचय. हानिरित्यर्थ, उपसर्गवैचित्र्याद‌र्थभेद ॥ २ ॥

प्रत्याहार उपादानं

प्रत्याहरण प्रत्याहारः ॥ १ ॥ उपादीयते उपादानम् ॥ २ ॥

बुद्धिशक्तिस्तु निष्क्रम. ॥ १६० ॥

बुद्धिशक्तिरष्टधा, प्रज्ञासामर्थ्यं निष्क्रमण निष्क्रमः ॥ १ ॥ १६० ॥

सङ्ग्रहमाह—

इत्यादयः क्रियाशब्दाः लक्ष्या धातुषु लक्षणम् ।

एवप्रकारा सिद्धक्रियाशब्दा अन्येऽपि लक्षणीयाः, तेषा तु लक्षण प्रकृतिप्रत्ययविभागप्रतिपत्तिर्धातुपारायणादिति ॥

अथाव्ययानि वक्ष्यन्ते—

अथेति साधारणशब्दादनन्तरम्, न व्ययन्ति–लिङ्गकारकनानात्वेऽपि न नानारूपता प्रतिपद्यन्ते इति लिहादित्वादचि अव्ययानि स्वरादीनि, यदुक्तम्—

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" ॥ १ ॥

अत एव अलिङ्गानि द्वित्वादिसंख्यारहितानि चैतानि । यदवोचाम लिङ्गानुशासने—

"नन्ता संख्या डतिर्युष्मदस्मच्च स्युरलिङ्गका ।
पदं वाक्यमव्ययं वेत्यसख्यं च तद्बहुलम्" ॥१॥

पुंक्लीबलिङ्गश्चायमव्ययशब्दः ॥

स्वः स्वर्गे

सुष्ठु अर्यते स्वः, "सोरर्त्तेर्लुक् च" ॥ ( उणा-९४६ ) ॥ इत्यर्, स्वरतीति वा विच्, यथा–"छायेव या स्वर्जलधेर्जलेषु" ॥ १ ॥

भूः रसातले ॥ १६१ ॥

भवन्त्यत्र भू, बाहुलकात् सुक् । यथा–'भूर्लोकः' ॥ १ ॥ १६१ ॥

भुवो विहायसा व्योम्नि

भवन्त्यत्रेति भुव, "मिथिराजि-" ॥ ( उणा–९७१ ) ॥ इति किदस् यथा—

"भूर्भुव स्वस्त्रयीवीरः स एष दशकन्धरः" ॥ १ ॥

वीना पक्षिणा हाय गतिम्, अनन्तत्वात् स्यति विहायसा विच्, विहाः पक्षिणस्ताना-यस्यति वा बाहुलकादाप्रत्यय', यथा–"विहायसा पश्यं विहङ्गराजम्" ॥ २ ॥

द्यावाभूम्योस्तु रोदसी ।

रोदसी इति विभक्त्यन्तप्रतिरूपकमव्ययम् । यथा—

"रवः श्रवणभैरव स्थगितरोदसीकन्दरः" ॥ १ ॥

उपरिष्टादुपर्यूर्ध्वे

ऊर्ध्वे देशे उपरिष्टात्, उपरि '

इति साधू । यथा–गिरेरुपरिष्टाद्,

स्यादधस्तादधोऽप्यवाक् ॥ १६२ ॥

अधरे देशेऽधस्तात, अध "पूर्वावराधरेभ्यो-" ॥ ७ । २ । ११५ ॥ इत्यस्तादसौ प्रत्ययौ अधादेशश्च । यथा–गिरेरधस्तात्, गिरेरधः ॥ १ ॥ २ ॥ १६२ ॥

वर्जने त्वन्तरेणर्ते हिरुग् नाना पृथग् विना ।

अन्तरेणेति तृतीयान्तप्रतिरूपकमव्ययम् यथा–"त्वामन्तरेण नहि संप्रति कश्चिदीशः" ॥१॥ ऋते इति सप्तम्यन्तप्रतिरूपकम् । यथा–"ऋते कृशानोर्नहि मन्त्रपूतम्" ॥२॥ हिनोति हिरुक् ' द्रागादय " ॥ (उणा–८७०) इति निपात्यते, यथा–"हिरुक् कर्मणा मोक्ष " कर्मक्षये मोक्ष इत्यर्थ ॥ ३ ॥ न आनयति नाना " डित् " ॥ (उणा–६०५) ॥ इत्याप्रत्ययः" । यथा–"नाना नारी निष्फला लोकयात्रा" ॥ ४ ॥ प्रथते पृथक् "ऋधिप्रथि-" ॥ ( उणा–८७४ ) ॥ इति किल्याजि साधु । यथा–"त्वत्त पृथग् नास्ति बन्धु·" ॥५॥ विनश्यति निषेधयति विना ' डित्" ॥ (उणा–६०५ ) ॥ इत्याप्रत्ययः यथा–"विना वात विना वर्षम्" ॥ ६ ॥

साकं सत्रा समं सार्द्धममा सह

एते परस्पर तुल्यार्थाः, स्यति साः विच्, तं कामयते साकं विच् ॥ १ ॥ सत् त्रायते सत्रा विच्, यथा–"सत्रा कलत्रैर्गार्हस्थ्यम्" ॥ २ ॥ सगतमभति समं विच् ॥३॥ स्यति सास्तेन रुध्यति सार्द्धम्, "सोरेतेरम्" ॥ ( उणा–९३४ ) ॥ इत्युपलक्षणादम् ॥ ४ ॥ न मात्यमा "डित्" ॥ ( उणा–६०५ ) ॥ इत्याप्रत्ययः ॥ ५ ॥ सहते सह यथाऽस्मदुपज्ञे द्व्याश्रयमहाकाव्ये–

"पुलिनानि सह क्षोमैः सरांसि नभसा समम् ।
ज्यौत्स्न्यऽमाऽहाऽभिषन्मेघा साकं कैलाससानुभिः ॥ १ ॥ ६ ॥

कृतं त्वलम् ॥ १६३ ॥
भवत्वस्तु च किं तुल्याः

कृतम्, भवतु, अस्तु च त्रय त्याद्यन्तप्रतिरूपका अव्ययाः ॥ १ ॥ २ ॥ ३ ॥ अलनमलम्, बाहुलकादम् ॥ ४ ॥ कौति किम्, "कोर्डिम्" ॥ ( उणा–९३९ ) ॥ यथा द्व्याश्रये–

"गोत्रेण पुष्करावर्त्त ! किं त्वया गर्जितैः कृतम् ? ।
विद्युताऽल भवत्वाद्भिर्हसा ऊचुर्बिल घनम्" ॥ ५ ॥ १६३ ॥

प्रेत्यामुत्र भवान्तरे ।

प्रायण प्रेत्य । यथा-"अन्यो धन प्रेत्य गतस्य भुङ्क्ते" ॥ १ ॥ अमुष्मिन्नमुत्र, यथा "अमुत्र भविता यत् ते तच्चिन्तय शुभाशुभम्" ॥ २ ॥

तूष्णीं तूष्णीकां जोषं च मौने

'तुष तुष्टौ' तूषति तूष्णीम्, "तूषेरीम् णोऽन्तश्च" ॥ ( उणा-५४० ) ॥ इति साधु, यथा-"मुनिस्तूष्णीमास्ते" ॥ १ ॥ कुत्सितमल्पमज्ञात वा तूष्णीं तूष्णीकाम्, "तूष्णीकाम्" ॥ ७ । ३ । ३२ ॥ इति साधु, अयं कुत्सितादिविशिष्टे मौने वर्त्तते, यथा-"मुनिः तूष्णीकामास्ते" ॥ २ ॥ जुष्यते जोषम्, बाहुलकादम् । यथा-"जोषमास्ते" ॥ ३ ॥

दिष्ट्या तु सम्मदे ॥ १६४ ॥

दिशति दिष्ट्या "वृमिथिदिशिभ्य.-" ॥ ( उणा-६०१ ) ॥ इति क्यादिरा-प्रत्ययः । यथा-' दिष्ट्या पुत्रो जात.," समुपजोषमपि ॥ १ ॥ १६४ ॥

परित' सर्वतो विष्वक् समन्ताच्च समन्ततः ।

"पर्यभे सर्वोभये" ॥ ७ । २ । ८३ ॥ इति तसौ परित । यथा-परितो ग्रामम् ॥ १ ॥ सर्वासु दिक्षु सर्वत यथा-सर्वतो ग्रामम्, ॥२॥ विश्वगञ्चति विष्वक्, यथा-"विष्वग् व्याप्य स्थितो महीम्" ॥ ३ ॥ समन्ततोऽतति समन्तात् विच्, पञ्चम्यन्त-प्रतिरूपक वा । यथा-"समन्ताद् वाति मारुतः" ॥ ४ ॥ समन्ततस्तसन्तः । यथा-"येन चक्रे समन्तत." ॥ ५ ॥

पुरः पुरस्तात् पुरतोऽग्रतः

पूर्वे देशे पुर, पुरस्तात "पूर्वापराधर-" ॥ ७ । २ । ९८ ॥ इत्यस्-अस्तात्-प्रत्ययौ पुरादेशश्च ॥ १ ॥ २ ॥ पुर तस्याति पुरत: ॥ ३ ॥ अग्रेऽग्रतः आद्यादि-त्वात् तसुः । यथा-पुर. सर, पुरस्ताद् गच्छति, पुरतो गच्छति, अग्रतः सर ॥४॥

प्रायस्तु भूमनि ॥ १६५ ॥

प्रैति प्रायः "अस्" ॥ ( उणा-९५२ ) ॥ इत्यस् । यथा-"प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादर " ॥ १ ॥ १६५ ॥

साम्प्रतमधुनेदानी सम्प्रत्येतर्हि

साप्रत विभक्त्यन्तरूपकम् । यथा "भीमार्जुनव्यतिकर साप्रत वर्त्तते तयोः" ॥ १ ॥ अस्मिन् कालेऽधुना, इदानीम् एतर्हि ' सदाधुनेदानीतदानीमेतर्हि" ॥ ७ । २ । ९६ ॥ इति साधवः यथा-"अधुना तस्य विस्तीर्णविभवान्धस्य के वयम्?" । "इदानी त्व नाथः" "भवन्तमेतर्हि मनस्विगर्हिते" इति ॥ २ ॥ ३ ॥ ४ ॥ सम्प्रथते संप्रति

"प्रथेर्लृक् च वा" ॥ ( उणा-६४७ ) ॥ इति ति, सभूतिरिदानी इति वा "तिष्ठ-द्गिवत्यादयः" ॥ ३ । १ । ३६ ॥ इति साधु यथा-"सप्रत्यसाम्प्रत वक्तुम्" ॥५॥

अथाञ्जसा ।

द्राक् स्राग्‌रं झटित्याशु मङ्क्ष्वह्नाय च सत्वरम् ॥ १६६ ॥

अञ्जसेति तृतीयान्तप्रातिरूपकमव्ययम् । यथा-"यद्वाऽञ्जसा जयति ब्रह्मलोकम्" ॥१॥ द्रवति द्राक् "द्रागादयः" ॥ (उणा-८७०) ॥ इति निपात्यते यथा-"द्राग् विद्रुतं कातरैः" ॥२॥ स्राक् "सरन्त्यभिसारिकाः" ॥ ३ ॥ इयर्त्यैर बाहुलकादम्, यथा-"अरं याति तुरङ्गमः" ॥ ४ ॥ झटदित्यनुकरणादितौ झटिति "इतावतो लुक्" ॥७। २ । १४६ ॥ इति साधुः । यथा-"आनीय झटिति घटयति विधिरभिमतमभिमुखी-भूत" ॥५॥ अश्नुते आशु "कृवापाजि-" ॥ (उणा-१) ॥ इत्युण्, यथा-"आश्व-पैहि मम सीधुभाजनात्, ॥६॥ मज्जति मङ्क्षु "मस्जीष्यशिभ्यः सुक्" ॥ (उणा-८२६ ) ॥ यथा-"मङ्क्षूदपादि पुरतः पटलैरलीनाम्" ॥ ७ ॥ अह्नायेति विभक्त्य-न्तप्रतिरूपकमव्ययम् । यथा-"अह्नाय सा नियमजं क्रममुत्ससर्ज"॥८॥सत्वरम्॥९॥

सदा सनाऽनिशं शश्वत्

सर्वस्मिन् काले सदा "सदाऽधुनेदानीं-" ॥ ७ । २ । ९६ ॥ इति साधु । यथा-"सदा पुरोडाशपवित्रिताधरे" सर्वदाऽपि ॥ १ ॥ सनोति सना "सनिक्षमि" ॥ (उणा-६०४) इत्याप्रत्ययः यथा-सनातनः, सनत्, सनादित्यपि यथा-सनत्कुमारः सनात् कुमारः ॥ २ ॥ न निशाम्यति अनिशम्, "गमिजमि-" ॥ (उणा-९३७) ॥ इति डिदम् । यथा-"ये नमन्त्यनिशं जिनम्" ॥ ३ ॥ शशाति शश्वत् "संश्चद्" ॥ ( उणा-८८२ ) ॥ इति निपात्यते । यथा-"शश्वत् पठति छात्रः" ॥ ४ ॥

भूयोऽभीक्ष्णं पुनःपुनः ।

असकृन्मुहुः

भवति भूयः "विहायस्-" ॥ ( उणा ९७६ ) ॥ इत्यसि निपात्यते यथा-"भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितम्" ॥१॥ अभीक्ष्यते अभीक्ष्णम्, "श्रूणतृण-" ॥ ( उणा-१८६ ) ॥ इति बाहुलकान्मान्तो निपात्यते यथा-"तक्ष्णोतीव तथाऽन्योऽभीक्ष्ण तीक्ष्णाक्षरक्षारैः" ॥ २ ॥ पुनाति पुनः "पूसन्य मिभ्यः-" ॥ (उणा-९४७) ॥ इत्यर् पुनादेशश्च, आभीक्ष्ण्ये द्वित्वे पुन पुनः । यथा-"पुनःपुनरिदं त्वामेवमभ्यर्थये" ॥ ३ ॥ एको वारोऽस्य सकृत् "एकात् सकृच्चास्य" ॥७ । २ । १११॥ इति साधु, न सकृत् असकृत् । यथा-"गन्तव्यमस्ति कियदि-

स्वसकृद् ब्रुवाणाः" ॥४॥ मुह्यति मुहुः "मुहिमिथ्यादे कित्" ॥ (उणा–१०००) ॥ इत्युस् । यथा–"यान्त्या मुहुर्वलितकन्धरमाननं तत्" ॥ ५ ॥

सायं तु दिनान्ते

स्यति सायम्, "स्यतेर्णित्" ॥ (उणा–९३६) ॥ इत्यम् । यथा–"सायं प्रातरमी पुण्यमग्निहोत्रमुपासते" सायंतनी सन्ध्या ॥ १ ॥

दिवसे दिवा ॥ १६७ ॥

दीव्यन्त्यत्र दिवा "दिविपुरि-" ॥ (उणा–५९९) ॥ इति किदाप्रत्ययः । यथा–दिवाकरः ॥ १ ॥ १६७ ॥

सहसैकपदे सद्योऽकस्मात् सपदि तत्क्षणे ।

सह स्यति सहसा "ड्नित्" ॥ (उणा–६०५) ॥ इत्याः, विभक्त्यन्तप्रतिरूपको वा । यथा-"सहसा विदधीत न क्रियाम्" ॥१॥ एकपदे विभक्त्यन्तप्रतिरूपकम्, यथा-"अयमेकपदे तया वियोगः" ॥ २ समानेऽहनि सद्यः "सद्योऽद्यपरेद्यवि–" ॥ ७ । २ । ९७ ॥ इति साधुः । यथा–"सद्य पतति मांसेन" ॥ ३ ॥ अकस्मादिति विभक्त्यन्तप्रतिरूपकम् । यथा–अकस्मादायातः ॥४॥ सपद्यते सपदि "पादिपठि–" ॥ ( उणा–६०७ ) ॥ इति इः, स्वरादिगणपाठात् समो मलोपः । यथा–"सपदि प्रदहत्युपेक्षितोऽग्निः" ॥ ५ ॥

चिराय चिररात्राय चिरस्य च चिराच्चिरम् ॥ १६८ ॥

चिरेण दीर्घकालार्थे

एते विभक्त्यन्तप्रतिरूपकाः । यथा–"चिराय निर्धनो भूत्वा भवत्यहो महाधनः" ॥ १ ॥ चिररात्राय यजते ॥ २ ॥ "चिरस्य धनलब्धाऽसि" ॥३॥ चिराद् दृष्टोऽसि ॥ ४ ॥ "चिरंतनमिदं वृत्तं बलीषु तस्याः स्खलिताः" ॥ ५ ॥ १६८ ॥ "प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः" ॥ ६ ॥

कदाचिज्जातु कर्हिचित् ।

अन्योऽन्य पर्याया एते । यथा–"न कदाचिदनीदृशं जगत्" ॥१॥ जायते जातु, यथा-"न जातु कामः कामानामुपभोगेन शाम्यति" ॥२॥ कर्हिचिद् भवति ॥ ३ ॥

दोषा नक्तमुषा रात्रौ

दुष्यति दोषा "सनिक्षमि-" ॥ ( उणा–६०४ ) ॥ इत्याप्रत्ययः यथा-दोषामन्यमहः ॥१॥ नश्यति भास्वानत्र नक्तम्, "नशिनूभ्यां नक्तनूनौ च" ॥ (उणा–

९३५ ) ॥ इत्यम् । यथा नक्तचरः ॥ २ ॥ उषत्युषा बाहुलकात् किदाप्रत्ययः । यथा-उषातनो वायु· ॥ ३ ॥

प्रगे प्रातरहर्मुखे ॥ १६९ ॥

प्रगे इति विभक्त्यन्तप्रतिरूपकम् । यथा-प्रगेतनो वायु ॥ १ ॥ प्रकर्षेणातति अत्र प्रात., "प्रादतेरर्" ॥ (उणा-९४५) ॥ यथा-"प्रातरेव समुत्थाय" ॥ २ ॥ १६९ ॥

तिर्यगर्थे तिरः साचि

तरति तिर "मिथिरञ्जि-" ॥ ( उणा-९७१ ) ॥ इति किदस्, यथा-तिरः कृत्वा काष्ठ गत । परिभूतेऽन्तर्ध्युपचारात् यथा-तिरस्कृतोऽरि: ॥ १ ॥ सचते सा चि "कमिवमि-" ॥ ( उणा-६१८ ) ॥ इति बहुवचनात् णिदिः यथा-"साचि लोचनयुगं रमयन्ती ॥ २ ॥

निष्फले तु वृथा मुधा ।

वृणोति वृथा "वृमिथि-" ॥ ( उणा-६०१ ) ॥ इति थादिः किदाप्रत्ययः यथा-वृथा दुग्धोऽनड्वान् ॥ १ ॥ मुञ्चति मुधा "मुचिस्वदेर्ध च" ॥ ( उणा-६०२ ) ॥ इत्याप्रत्ययः यथा-"मुग्धे ! मुधा ताम्यसि" ॥ २ ॥

मृषा मिथ्याऽनृते

मृष्यते मृषा "दिविपुरि-" ॥ (उणा-५९९) ॥ इति किदा यथा-मृषा वदति, मृषोद्यम् । ॥ १ ॥ मेथति मिथ्या "वृमिथि-" ॥ ( उणा-६०१ ) ॥ इति यादि-किदाप्रत्ययः यथा-"मिथ्यावादिनि ! दूतीति" ॥ २ ॥

अभ्यर्णे समया निकषा हिरुक् ॥ १७० ॥

समेति समया ॥ १ ॥ निकषति निकषा "समिण्निकषिभ्यामा" ॥ (उणा-५९८ ) ॥ इति साधू यथा-समया पर्वत नदी ॥ १ ॥ "लङ्का निकषा हनिष्यति" ॥ २ ॥ हिनोति हिरुक् यथा-मह्या हिरुक् ॥ ३ ॥ १७० ॥

शं सुखे

शाम्यति शम्, "गमिजमि-" ॥ (उणा-९३७) ॥ इति डिदम् । यथा-शंकरः ॥ १ ॥

बलवत् सुष्ठु किमुतातीव निर्भरे ।

बलं वाति बलवत् "सश्चद्वेहत्-" ॥ ( उणा-८८२ ) ॥ इति निपात्यते यथा-"बलवदपि शिक्षितानामात्मन्यप्रत्यय चेतः" ॥ १ ॥ शोभनं तिष्ठतीति सुष्ठु "दुःस्वप-"

॥(उणा-७३२)॥इति किदुः, "भीरुष्ठानादित्वात् षत्वम् । यथा-"सुष्ठु खल्विदमुच्यते" ॥ २ ॥ किमूयते किमुत "पुतपित्त-" ॥ ( उणा-२०४ ) ॥ इति निपात्यते यथा-किमुत ब्रह्मविन्निभिः ॥३॥ न तीवत्यतीव, अव्ययसमुदायो वा । यथा-"अतीवक्षुत्-पिपासितात्" स्वती अपि, यथा-सुसिक्त आम्र. फलति, अतिसिक्त इति ॥ ४ ॥

## प्राक् पुरा प्रथमे

प्राञ्चति प्राक् यथा-"प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः" ॥१॥ पुरति पुरा "दिविपुरि-" ॥ ( उणा-५९९ ) ॥ इति किदा. । यथा-पुराकृतम् ॥ २ ॥

## सवद् वर्षे

संवदति संवत् "संश्वद्-" ॥ (उणा-८८२ ) ॥ इति निपात्यते यथा-विक्रम-संवत्, सिद्धहेमकुमारसवदिति ॥ १ ॥

## परस्परे मिथः ॥ १७१ ॥

मिथ्यते मिथः "मिथिरञ्जि-" ॥ ( उणा-९७१ ) ॥ इति किदस्, यथा-मिथः प्रहरतः ॥ १ ॥ १७१ ॥

## उषा निशान्ते

उषत्युषा, यथा-उषातनः ॥ १ ॥

## अल्पे किञ्चिन्मनागीषच्च किञ्चन ।

किमपि चिनोति किञ्चित्, यथा-"किञ्चित् कुञ्चितलोचनाभिरसकृत् प्राताः कदम्बानिलाः" ॥१॥ मन्यते मनाक् "द्रागादय." ॥ (उणा-८७०) ॥ इति निपात्यते । यथा-"ब्रूते मनाग् नन्दनम्" ॥ २ ॥ ईषति ईषत् "सश्वद्-" (उणा-८८२) इति निपात्यते । यथा-ईषत्पाण्डुः ॥ ३ ॥ किमपि चनति किञ्चन । यथा-प्राचीमङ्कुरयन्ति किञ्चन रुचो राजीवजीवातव ॥ ४ ॥

## आहो उताहो किमुत वितर्के किं किमूत च ॥ १७२ ॥

वितर्को विकल्पः पक्षान्तरम्, आजुहोत्याहो विच् । यथा-अय स्थाणुराहो पुरुष ॥ १॥ उताजुहोत्युताहो । यथा-"उताहोस्विद् भवेद् राजा नल परपुरंजय "॥२॥ किमुतेत्यव्ययसमुदाय. । यथा-किमुत रज्जु , किमुत सर्पः ? ॥ ३॥ कौति किम् । यथा-किं रज्जु , किं सर्पं ? ॥४॥ किमु इत्यव्ययसमुदाय । यथा-"खेदयेत् किमु मानयत्" ॥ ५ ॥ अव्यते उतः, "पुतपित्त-" ॥ ( उणा-२०४ ) ॥ इति निपात्यते । यथा-"एकमेव वर पुसामुत राज्यमुताश्रम." ॥ ६ ॥ १७२ ॥

इतिह स्यात् संप्रदाये

इति वृत्त जिहीते इतिह, अव्ययसमुदायो वा। यथा–इतिह स्माहुराचार्याः ॥१॥

हेतौ यत् तद् यतस्ततः ।

यजते यद् ॥ १ ॥ तनोति तद् "तनित्यजियजि-" ॥ ( उणा–८९५ ) ॥ इति ड्द् । यथा-यत् सभासु प्रगल्भसे तत् पूज्योऽसि ॥ २ ॥ यतस्तत इत्येतौ विभक्त्यन्तप्रतिरूपकौ । यथा–यतो विद्वांस्तत. सभ्य., येन-तेनावपि । यथा–येन दाता तेन श्लाघ्य इत्यादि ॥ ३ ॥ ४ ॥

संबोधनेऽङ्ग भोः प्याट् पाट् हे है हंहो अरेऽयि रे ॥१७३॥

अङ्गत्यङ्ग यथा–अङ्गानङ्ग ! ॥ १ ॥ भाति भो ! बाहुलकात् डोस्, यथा–भो ! भार्गव ! ॥ २ ॥ अप्यटति प्याट् पृषोदरादित्वात्, यथा–प्याट् ! पावक ! ॥ ३ ॥ पाटयति पाट् यथा–पाट् ! पान्थ ! ॥४॥ हिनोति हे विच् । यथा–हे ! हेरम्बिक-मम्बेति ॥५॥ हिनोति है बाहुलकाद् डै , यथा–है ! बाड्वले ! ॥ ६ ॥ हु जुहोति हहो। यथा–"हहो ! तिष्ठ सखे ! विवेकबहुभि. प्राप्तोऽसि पुण्यैर्मया" ॥ ७ ॥ न रिणात्यरे विच् । यथा–अरे ! क्षत्रियखेट ! ॥ ८ ॥ एत्ययि "स्वरेभ्य इ " ॥ (उणा-६०६ ) ॥ यथा–अये ! जीवितनाथ ! जीवसि ॥ ९ ॥ रिणाति रे यथा–रे ! चेटा ॥ १० ॥ अहो, अररे इत्यादयोऽपि ॥ १७३ ॥

श्रौषड् वौषड् वषट् स्वाहा स्वधा देवहविर्हुतौ ।

श्रूयते श्रौषट्, वाति वौषट्, उह्यते वषट् एते बाहुलकात् क्विबन्ता निपात्यन्ते यथा–अस्तु श्रौषट् ॥ १ ॥ व्रीही वौषट् ॥ २ ॥ वषडिन्द्राय ॥ ३ ॥ सुष्ठु ब्रूते स्वाहा "सो ब्रूग आह च" ॥ (उणा–६०३) ॥ इत्याप्रत्यय., आहादेशश्च । यथा–स्वाहा देवेभ्यः ॥ ४ ॥ स्वदते स्वधा "मुचिस्वदेर्धं च" ॥ ( उणा–६०२ ) ॥ इत्याप्रत्ययः यथा–स्वधा पितृभ्यः ॥ ५ ॥

रहस्युपांशु

उपांशुते उपांशु "अशेरांशोऽन्तश्च" ॥ ( उणा–७१९ ) ॥ इत्युः । यथा–तेषांमुपांशु बधं प्रकुर्वीत ॥ १ ॥

मध्येऽन्तरन्तरेणान्तरेऽन्तरा ॥ १७४ ॥

अमत्यन्त. "पूसनि-" ॥ ( उणा–९४७ ) ॥ इत्यर् अन्तादेशश्च । यथा–गृहस्यान्तर्विगाहते" ॥ १ ॥ अन्तरेणेति विभक्त्यन्तप्रतिरूपकम् यथा- "अन्तरेण

गन्धमादन माल्यवन्त चोत्तराः कुरवः'' ॥२॥ अन्तरे सप्तम्यन्तप्रतिरूपकम् । यथा-"आवयोरन्तरे जाता पर्वता सरितो द्रुमा.'' ॥ ३ ॥ अन्तो राति अन्तरा ''डित्'' ॥ (उणा-६०५) ॥ इत्या. । यथा--''अन्तरा निषधं नील च विदेहा.'' ॥४॥१७४॥

प्रादुरावि. प्रकाशे स्यात्

प्राप्ति प्रादु: "रुयर्त्ति-'' ॥ (उणा--९९७) ॥ इत्युस् । यथा--''प्रादुरासीद्वसुधरा'' ॥ १ ॥ अवत्यावि ''अवेर्णित्'' ॥ (उणा--९९५) ॥ इतीस् । यथा--"तेषामाविरभूद् ब्रह्मा परिम्लानमुखश्रियाम् ॥ २ ॥

अभावे त्व न नो नहि ।

अतति अ "क्वचित्'' ॥ ५ । १ । १७१ ॥ इति ड , यथा-''अविप्र इव भाषसे'' विप्रवन्न ब्रूष इत्यर्थ ॥ १ ॥ नह्यति न । यथा -''नैक सुप्तेषु जागृयात्'' ॥२॥ नयति नो बाहुलकात् डो । यथा--नो जानीम. किमत्र विधास्यति ॥ ३ ॥ नह्यति नहि ''पदिपठि-'' ॥ ( उणा--६०७ ) ॥ इति इ , अव्ययसमुदायो वा यथा--नहि भीरुगतं निवर्त्तते ॥ ४ ॥

हठे प्रसह्य

प्रहसनं पूर्वं प्रसह्य । यथा--"प्रसह्य वित्तानि हरन्ति चोरा:'' ॥ १ ॥

मा मास्म वारणे

माति मा ''डित्'' ॥ ( उणा--६०५ ) ॥ इत्याप्रत्ययः । यथा--''कुण्ठः सिद्धपते. कृपाण इति रे ! मा मंसत क्षत्रिया '' ! ॥ १ ॥ मास्मेत्यव्ययसमुदाय । यथा--"प्रावृड् जातेति हे ! भूपाः ! मास्म त्यजत काननम्'' ॥ २ ॥

अस्तमदर्शने ॥ १७५ ॥

अस्यतेऽस्त बाहुलकात् तम् । यथा--"अस्तंगते शशिनीति'' ॥ १ ॥ १७५ ॥

अकामानुमतौ कामम्

आदावनिच्छाया पश्चादङ्गीकारे इत्यर्थ , काम्यते कामं बाहुलकादम् । यथा--''कामं भवन्तु सरितो भुवि सुप्रतिष्ठा '' ॥ १ ॥

स्यादों ओं परम मते ।

मतमभ्युपगमस्तत्र, अवत्योम् ''अवेर्मः'' ॥ ( उणा-९३३ ) ॥ इति मे 'मव्यवि-'' ॥ ४ । १ । १०९ ॥ इत्युपान्त्येन ऊत्वम्, ततो गुण. यथा--"ॐ

मित्युक्तवतोऽथ शार्ङ्गिण '' इति ॥१॥ 'अमण् रोगे' आमयति आम्। यथा- आं कुर्म. ॥२॥ परम विभक्त्यन्तप्रतिरूपकम्। यथा--परम तत्रावासम् ॥ ३ ॥

कच्चिचदिष्टपरिप्रश्ने

कुत्सितं चिनोति कच्चित् यथा। कच्चिज् जीवति मे माता ? ॥ १ ॥

अवश्य नून च निश्चये ॥ १७६ ॥

अवश्यायतेऽवश्यं बाहुलकात् डिदम्। यथा-"अवश्यं यातारश्चिरतरमुषित्वाऽपि विषयाः" ॥ १ ॥ नूनं " नशिनूभ्या नक्तनूनौ च " ॥ (उणा ९३५) ॥ इत्यम्। यथा-"नूनं हन्ताऽस्मि रावणम्" ॥ २ ॥ ॥ १७६ ॥

बहिर्बहिर्भवे

वंहते बहि " बहिर्वंहेर्नलुक् च " ॥ (उणा-९९०) ॥ इतीस्। यथा-ग्रामाद् बहिर्वसति ॥ १ ॥

ह्यः स्यादतीतेऽह्नि

जहाति ह्य अनन्तरातीतदिनम्, "पाहाकूभ्या पयह्यौ च" ॥(उणा-९५३)॥ इत्यस्। यथा-ह्यस्तनः ॥ १ ॥

श्व एष्यति ।

अह्नीत्येव श्वसिति श्व. अनन्तरागामिदिनम्, यथा अद्य श्वो वा गमिष्यति ॥१॥

नीचैरल्पे

न्यञ्चति नीचै " न्युद्भ्यामञ्चः-'' ॥ (उणा-१००३) ॥ इति कैसि साधुः। यथा-"नीचैर्वाति समीरण." ॥ १ ॥

महत्युच्चै.

उदञ्चत्युच्चैः " न्युद्भ्याम्- " ॥ (उणा-१००३) ॥ इति कैसि साधुः। यथा "उच्चैरुच्चरतु चिरम्" ॥ १ ॥

सत्त्वेऽस्ति

सत्त्वे सत्ताया अस्तीति तिवन्तप्रतिरुपकः। यथा-अस्तिक्षीरा ब्राह्मणी ॥ १ ॥

दुष्ठु निन्दने ॥ १७७ ॥

निन्दित तिष्ठति दुष्ठु " दु.स्वपवनिभ्य -'' ॥ (उणा-७३२) ॥ इति किदुः। भीरुष्ठानादित्वात् षत्वम्। यथा दुष्ठु वादी खल. ॥ १ ॥ ॥ १७७ ॥

ननुच स्याद् विरोधोक्तौ

ननुचेत्यव्ययसमुदाय । यथा-ननुच कः शब्दः ?, इति ॥ १ ॥

पक्षान्तरे तु चेद् यदि ।

चिनोति चेत् " संश्चद्-" ॥ ( उणा-८८२ ) ॥ इति निपात्यते ॥ १ ॥ यदति यदि विच्, बाहुलकाद् गुणाभाव । यथा -"सन्तश्चेदमृतेन किं यदि खलास्तत् कालकूटेन किम्" ? ॥ २ ॥

शनैर्मन्दे

श सुखं नयति शनैः " शमो नियो डैस् मलुक् च " ॥ ( उणा-१००४ ) ॥ इति साधु. । यथा-"शनैर्याति पिपीलकः" ॥ ४ ॥

अवरे त्वर्वाक्

अवर पराद्न्यस्तत्र, अवरमञ्चत्यर्वाक् पृषोदरादित्वात् । यथा-वर्षात् षोडशादर्वाक् ॥ १ ॥

रोषोक्तावुम्

ऊयते उं बाहुलकात् किन् म् । यथा-"उ सैवास्मि तव प्रिया" ॥ १ ॥

नतौ नमः ॥ १७८ ॥

नमन नमः " अस् " ॥ ( उणा-९५२ ) ॥ इत्यस् । यथा—

"नमो दुर्वाररागादिवैरिवारानिवारिणे ।
अर्हते योगिनाथाय महावीराय तायिने" ॥ इति ॥ १ ॥

नमःशब्दश्चायं शास्त्रान्ते मङ्गलार्थः, यतो मङ्गलादीनि, मङ्गलमध्यानि, मङ्गलान्तानि च शास्त्राणि भवन्तीति । शेषश्चात्र—

आनुकूल्यार्थकं प्राध्वमसाकल्ये तु चिच्चन ।
तु हि च स्म ह वै पादपूरणे, पूजने स्वती ॥
वद् वा यथा तथैवैव साम्येऽहो ही च विस्मये ।
स्युरेव तु पुनर्वै वेत्यवधारणवाचका' ॥
ऊ पृच्छायामतीते प्राक् निश्चयेद्धाञ्जसा द्वयम् ।
अतो हेतौ मङ्क्षु प्रत्यारम्भेऽथ स्वयमात्मनि ॥
प्रशंसने तु सुष्ठु स्यात् परश्वः श्व परेऽहनि ।
अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वेद्युरादय' ॥
समानेऽहनि सद्यः स्यात् परे त्वह्नि परेद्यवि ।

उभयद्युस्तूभयेद्यु' समे युगपदेकदा ॥
स्यात् तदानीं तदा तर्हि यदा यर्ह्यन्यदैकदा ।
परुत् परार्येषमोऽब्दे पूर्वे पूर्वतरेऽत्र च ॥
प्रकारेऽन्यथेतरथा कथमित्थं यथा तथा ।
द्विधा द्वैधा त्रिधा त्रेधा चतुर्धा द्वैधमादि च ॥
द्विस्त्रिश्चतुः पञ्चकृत्व इत्याद्यावर्त्तने कृते ।
दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥

अव्ययानामनन्तत्वात् दिग्मात्रमिह दर्शितम् । यदाहुः—

"इयन्त इति सङ्ख्यानं निपातानां न विद्यते ।
प्रयोजनवशादेते निपात्यन्ते पदे पदे" ॥ इति ॥ १७८ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञाभिधानचिन्तामणिनाममालाटीकायां
सामान्यकाण्ड. षष्ठ ॥ ६ ॥



॥ समाप्ता चेयमभिधानचिन्तामणिनाममालाटीका ॥








॥ अर्हम् ॥

# यशोविजयजैनग्रन्थमाला.

नाम

संस्कृतप्राकृतभाषयोर्नानाविधप्राचीनकाव्यनाटकच्छन्दोऽलङ्कारव्याकरणन्यायज्यौतिषादिग्रन्थानां संग्रहः ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादाम्भोजचञ्चरीकायमाणाभ्यां
श्रावकपं०-हरगोविन्ददास-बेचरदासाभ्यां संशोधित ।

४४.

स्याद्वादागमवीचिमालिविलसत्-ससूक्तिमुक्तावहा
प्रौढप्रातिभपूर्वसूरिनिशित-प्रेक्षागुणैर्योजिता ।
एषा ऽनन्यसुविज्ञधर्मविजयाचार्य-प्रसादाच्छुभा
विज्ञानं प्रतिमासमाकलयतु श्रीग्रन्थमाला सताम् ॥ १ ॥

Printed by PURUSHOTAMDAS GIGABHAI PANCHBHAYA at his "Vidya Vijaya" Printing Press and Published by
Shah Harakhchand Bhurabhai,
*BHAVNAGAR*.

वार्षिकमूल्यं रूप्यकाष्टकम् ।

श्री विद्याविजय प्रिन्टींग प्रेस—भावनगर.

# विषयानुक्रमः ।

YASHOVIJAYA JAINA GRANTHAMALA [36]

THE

# SHABDARATNAKARA

OF

*VACHANACHARYA SHRI SADHU SUNDARA GANI*




EDITED BY

SHRAVAK PANDIT HARGOVINDDAS

AND

SHRAVAK PANDIT BECHARDAS,

Most devoted Servants of His Holiness Shastra Visharad
Jainacharya Shri Vijaya Dharma Suri.

WITH

The pecuniary help of Shree Jain Shvetambar Sangha
**OF RANGOON.**

*PUBLISHED BY SHAH HARSHCHAND BHURABHAI,*

AND

*Printed by Babu Ganga Prasad Gupta, at his*
*Art Printing Works, Benares City.*

Veer-Era, 2439.

*Price* 12 *annas.*

"खरतरमतपाथोराशिवृद्धौ मृगाङ्काः
यवनपतिसभायां ख्यापिताहन्मताज्ञाः ।
प्रहतकुमतदर्पाः पाठकाः साधुकीर्ति-
प्रवरसदभिधानाः सिंहतुल्या जयन्ति ॥
तेषां शास्त्रसहस्रसारविदुषां शिष्येण शिक्षाभृता
भक्तिस्थेन हि साधुसुन्दर इति प्रख्यातनाम्ना मया ।
ग्रन्थोऽयं विहितः कवीश्वरवचोबुद्ध्योक्तिरत्नाकरः
स्वाऽन्येषां हितहेतवे बुधजनैर्मान्यश्चिरं नन्दतु ॥" इति ।

ते च कांस्कान् ग्रन्थानग्रन्थिषत इत्यपि नावगत सपूर्णमधुना, किन्तु तेषां ग्रन्थरत्नत्रयमुपलभ्यते साम्प्रतम्- एकस्त्वय कोशः, उक्तिरत्नाकर', स्वोपज्ञक्रियाकल्पलताख्यटीकानिष्टङ्कितो धातुरत्नाकरश्चेति ।

तेषु एकेनैवानेन कोशसमीक्षणेन तेषां शब्दशास्त्रपारगतत्वमवगम्यते एव सहृदयानामिति । सत्स्वपि नैकेषु कोशेषु नायमेषामायास आयासः, यतस्तैरत्र शब्दार्थभेदसग्रह विधाय सर्वेभ्योऽपि कोशेभ्योऽयमत्यरेचि, तत्तु सुस्पष्टमेव शब्दविदामिति अय च कोश. षट्काण्ड्या व्यभाजि तैः— तत्र क्रमेण, प्रथमोऽर्हत्काण्ड , देवकाण्डः, मानवकाण्ड , तिर्यक्काण्ड', नारककाण्ड सामान्यकाण्डश्चेति । कोशमिमं कृत्वा तै परमकारुणिकै कवयोऽत्यन्तमुपकृता इति । अस्य च शोधनानेहसि लिखितपुस्तकत्रयमुपालप्स्वहि ततस्तेषा पुस्तकदातॄणा महोपकार मन्वानौ तान् नामग्राहमुल्लिखाव ।

२ अस्मद्गुरूणा श्रीशास्त्रविशारदजैनाचार्याणां प्रतिद्वय शुद्धं च, तयोरेकस्या' प्रान्ते " सवत् १७४८ फाल्गुनकृष्ण १४ दिने श्रीवीकानेरमध्ये भट्टारकजैङ्गमयुगप्रधान श्रीश्रीश्री १०८ श्रीजिनचन्द्रसूरिसूरीश्वराणां शिष्येण पण्डितनेमिसुन्दरेणालेखि प्रतिरियम ॥ श्रीरस्तु ॥ श्री." एवमुल्लेखोऽस्ति । अन्यस्या अन्ते तु—

"सप्ताब्धिगोत्रगोत्राप्रमिते संवति संवति ।
माघस्याद्याष्टमीघस्रे श्रीविक्रमपुरे पुरे ॥ श्री.
लिलिख एष सद्ग्रन्थो जयसुन्दरसाधुना ।
इयं प्रतिः स्थिरा भूयात् यावच्चन्द्रदिवाकरौ ॥"

एका तु श्रीयुतनेमचन्द्रयतिवर्याणाम्, तदन्ते तु "संवत् १७५६ फाल्गुनशुक्ल ९ दिने श्रीमेडतायां लिपीचक्रे अस्यान्ते चैकोऽकारादिशब्दानुक्रमोऽपि दत्त । प्रतिस्थलं,च टिप्पणेन, सुस्पष्टनमपि कृतम् । जागरूकमनसा शोधितेऽप्यस्मिन् ज्ञानावरणीयोद्भवाः स्खलना निरस्यन्त सज्जनाः पाठका हंसायिष्यन्ते-

इति प्रार्थयेते
हरगोविन्द-बेचरदासौ ।

अर्हम्

# अथ चतुर्थः परिच्छेदः ।

तथा, यच्चोक्तम्-एवमभिलाप्यानभिलाप्यमपि विरोधबाधितत्वादेवानुद्घोष्यमित्यादि। तदप्ययुक्तम्, विरोधासिद्धेः, अभिलाप्यानभिलाप्यस्यैव प्रमाणसिद्धत्वात्, तथाव्यवहारोपलब्धेः, अन्यथा व्यवहारोच्छेदप्रसङ्गात्; तथाहि—यदि तदेकान्तेनैवानभिलाप्यमभ्युपगम्यते, कथं तर्हि तथाविधशब्दात् तथाविधार्थप्रतीत्यादि ?। दृश्यते च 'अनलाद्यानय' इत्युक्ते तत्प्रतीतिपुरस्सरा केषांचिद् धूमध्वजादौ प्रवृत्तिः, तत्समासादनम्, समासादिते तथा निवेदनमिति कथञ्चिदभिलाप्यसिद्धिः; अन्यथा तदनुपपत्तिः, अतिप्रसङ्गात् ॥

सांप्रतं चतुर्थ आरभ्यते, तत्र चादावेवेदमाह—**तथा, यच्चोक्तमित्यादि** । तथा, यच्चोक्तं मूलपूर्वपक्षग्रन्थे, ' एवमभिलाप्यानभिलाप्यमपि वस्तु, विरोधबाधितत्वादेवानुद्घोष्यम ' इत्यादि । तत् किमित्याह—**तदप्ययुक्तम्** । कुत इत्याह—**विरोधासिद्धेः** । असिद्धिश्च, **अभिलाप्यानभिलाप्यस्यैव** वस्तुनः **प्रमाणसिद्धत्वात्** । प्रमाणसिद्धत्व च, **तथाव्यवहारोपलब्धेः**—अभिलाप्यानाभिलाप्यतयाऽर्थक्रियासिद्धेः, **अन्यथा**ऽभिलाप्यानाभिलाप्यतां विहाय वस्तुनः, **व्यवहारोच्छेदप्रसङ्गात्** । एतत्प्रदर्शनायैवाह—**तथाहीत्यादि** । तथाहीत्युपप्रदर्शने । यदि तद् वस्तु, एकान्तेनैवानभिलाप्यमित्यभ्युपगम्यते, कथं तर्हि तथाविधशद्वात् सांव्यवहारिकादनलादिरूपात्, **तथाविधार्थप्रतीत्यादि**—तथाविधस्तद्वाच्यानलार्थस्तत्प्रतीत्यादि कथम् ? । आदिशद्वात् प्रवृत्ति-तत्समासादन-निवेदनग्रहः । **दृश्यते** 'अनलाद्यानय' इत्युक्ते सति, तत्प्रतीतिपुरःसरा—अनलप्रतीत्यनुयायिनी, केषाञ्चित् प्रमातॄणां तथाविधक्षयोपशमयुक्तानाम्, धूमध्वजादावर्थे प्रवृत्ति-

स्तद्विषया, तथा, तत्समासादनं धूमध्वजसमासादनम्, समासादिते सति, तथा निवेदनम्—'अयमसौ यस्त्वयोक्तोऽनलः स आनीतः' इत्यादि । इति एवम्, कथञ्चिदभिलाप्यसिद्धिः । अन्यथा—एवमनभ्युपगमे, तदनुपपत्तिः—तत्प्रतीत्याद्यनुपपत्तिः । कुत इत्याह—अतिप्रसङ्गात् उदकादिवदनलस्यापि तच्छब्देनानभिलाप्यत्वात्, एतदविशेषतस्तत्रापि प्रतीत्याद्यापत्तेरतिप्रसङ्गः ॥

स्यादेतत्, अन्यापोहाभिधायकाः शब्दा इति, ततस्तं प्रतिपद्यते, ततश्च दृश्य-विकल्प्यावर्थावेकीकृत्य तद्बलात्प्रवर्तते, न तु शब्दाद्वस्त्वेव प्रतिपद्य प्रवर्तते, तस्य ततोऽनवगतेः, प्रतिबन्धाभावात्, तादात्म्य-तदुत्पत्त्यनुपपत्तेः, अनेकदोषप्रसङ्गात्, प्रतिबन्धमन्तरेणाप्यन्यतोऽन्यावगतावपन्यायः। परमार्थैकतानत्वे च शब्दानामनिमित्ता न स्यात्, प्रवृत्तिरर्थेषु चित्रतन्त्रान्तरगतेषु, परस्परविरोधित्वेन सर्वेषां तथाऽभावात्, अतीताजातयोश्चासत्त्वात्, न च स्यादनृतार्थता वाचः कस्याश्चिदपि, स्ववाच्यानिष्ठत्वात्, तद्व्यतिरेकेण तदप्रवृत्तेः, सङ्केतवशाच्च शब्दात् प्रतीतिस्तस्य चापोहमन्तरेणान्यत्र कर्तुमशक्यत्वात्, वस्तूनामानन्त्याद् व्यवहारानुपयोगादिति तद्वाच्यतैवेति । एतदप्ययुक्तम्, भावार्थशून्यत्वेन वाङ्मात्रत्वात्, अन्यापोहाभिधायकत्वेऽपि वस्तुनि प्रवृत्त्यनुपपत्तेः, तस्य ततो व्यतिरिक्ता-ऽव्यतिरिक्तविकल्पदोषप्रसङ्गात्—व्यतिरिक्तत्वे, स च वस्त्ववस्तु वा, वस्तुत्वे, अपरनामा सामान्यवादः, तथा च तद्द्वारायाता अनिवारितप्रसरा दोषाः । न च तदभिधानेऽपि वस्तुनि प्रवृत्तिः । न हि कश्चिद् 'दण्डं छिन्धि' इत्युक्तो दण्डिनं छिनत्त्यन्यत्र शब्दार्थव्यवहारानभिज्ञादिति । अवस्तुत्वे तु तदभिधाने न किञ्चिदुक्तं स्यात्, कथमेवमवस्तुप्रतिपत्तिपुरस्सरा तत्प्रवृत्तिः ? । न च तत्प्रतिपत्तावर्थतो वस्तुप्रतिपत्तिः, तुच्छत्वेन तस्यैवाप्रतिपत्तेः,

**अन्यथा वस्तुत्वविरोधात्, तस्य तेनाप्रतिबन्धात्, सामर्थ्यासिद्धेश्च । अव्यतिरिक्तत्वे वस्तुन एवापोहत्वात् तदभिधायकत्वं शब्दानामिति व्यर्थस्तत्प्रतिक्षेपाभिनिवेशः ॥**

**स्यादेतदित्यादि** । स्यादेतदथैवं मन्यसे—अन्यापोहाभिधायकाः शब्दा इति कृत्वा, तत शब्दात्, तमन्यापोहमन्याभावम्, प्रतिपद्यते । ततश्च दृश्य-विकल्प्यावर्थौ स्वलक्षण-सामान्यरूपौ, एकीकृत्य, तद्बलादेकीकरणसामर्थ्यात्, प्रवर्तते, न तु शब्दाद्, वस्त्वेव प्रतिपद्य प्रवर्तत इति । कुत इत्याह—**तस्य** वस्तुनः, ततः शब्दात्, अनवगतेरपरिच्छेदात् । अनवगतिश्च प्रतिबन्धाभावाद् वस्तु-शब्दयोः । प्रतिबन्धाभावश्च-तादात्म्य-तदुत्पत्त्यनुपपत्तेर्वस्तु-शब्दयोरेव । इयं च, अनेकदोषप्रसङ्गात्, तथाहि—वस्तु-शब्दयोस्तादात्म्ये क्षुरिका-ऽनला-ऽचलादिशब्दोच्चारणे वदनपाटन-दाह-पूरणप्रसङ्गः । तदुत्पत्तौ तु वस्तुनः शब्दोत्पत्तौ, वाहलीकस्यापि प्रथमपनसदर्शने तच्छब्दोच्चारणप्रसङ्गः, शब्दाद् वा वस्तूत्पत्तौ विश्वादरिद्रता, शब्दादेव कटकादिभावादित्यनेकदोषप्रसङ्गः । प्रतिबन्धमन्तरेणापि वस्तु-शब्दयोः, अन्यतः शब्दात्, अन्यावगतौ वस्त्ववगतौ, किमित्याह-**अपन्यायः** अतिप्रसङ्ग इत्यर्थः । दोषान्तरमाह—**परमार्थैकतानत्वे च** परमार्थैकनिष्ठत्वे च, शब्दानामनिमित्ता न स्यात् प्रवृत्तिरर्थेषु । किंविशिष्टेष्वित्याह—**चित्रतन्त्रान्तरगतेषु** प्रधाने-श्वरादिषु, किमित्यत आह—**परस्परविरोधित्वेन** हेतुना, सर्वेषामर्थानाम्, तथाजगद्धेतुत्वेन, अभावात्, तथाहि—यदि प्रधानं जगद्धेतुः, न तर्हीश्वर इत्यादि भावनीयम् । तथा, अतीता—ऽजातयोश्चापि वस्तुनोः, असत्त्वात् कारणात्, न स्यात् प्रवृत्तिरिति । तथा, न च स्यादनृतार्थता वाचः कस्याश्चिदपि । कुत इत्याह—**स्ववाच्यनिष्ठत्वाद्** वाचः प्रतिबन्धभावेन, तद्व्यतिरेकेण स्ववाच्यव्यतिरेकेण, तदप्रवृत्तेर्वाचोऽप्रवृत्तेरिति । तथा, संकेतवशाच्च शब्दात्, प्रतीतिर्लोके तथा दर्शनात्, तस्य च

संकेतस्य, अपोहमन्तरेणान्यत्र वस्तुनि, कर्तुमशक्यत्वात् । अशक्यत्वं च वस्तुनामानन्त्यात् प्रतिवस्तु संकेताकरणेन, व्यवहारानुपयोगात् संकेतस्य, । इति-एवम्, तद्वाच्यतैव-अपोहवाच्यतैव । इत्येतदाशङ्क्याह-**एतदप्ययुक्तं** यदनन्तरमुक्तम् । कुत इत्याह-**भावार्थशून्यत्वेन** हेतुना, वाङ्मात्रत्वात् तस्य । वाङ्मात्रत्वं च, अन्यापोहाभिधायकत्वेऽपि शब्दस्य, किमित्याह-**वस्तुनि प्रवृत्त्यनुपपत्तेः** । अनुपपत्तिश्च तस्यापोहस्य, ततो वस्तुनः, व्यतिरिक्ता-ऽव्यतिरिक्तविकल्पाभ्यां यो दोषस्तस्य प्रसङ्गात् । एनमेवाह-**व्यतिरिक्तत्वे** वस्तुनोऽपोहस्य, किमित्याह-**स शून्यापोहः**, वस्तु, अवस्तु वा ? । किञ्चातः ?, उभयथापि दोष इत्याह-**वस्तुत्वे** अपोहस्य व्यतिरिक्तस्य, अपरनामा सामान्यवादः । तथाचैवं च सति, तद्द्वारायाताः सामान्यद्वारायाताः, अनिवारितप्रसरा दोषा वृत्तिविकल्पादिजनिताः। उपचयमाह-**न चेत्यादिना** । न च तदभिधानेऽपि-अपोहाभिधानेऽपि, शब्देन, वस्तुनि प्रवृत्तिः, तस्य ततोऽन्यत्वात् । एतदेव निदर्शयन्नाह-**न हीत्यादिना** । न हि कश्चिद् माणवकः, 'दण्डं छिन्धि' इत्युक्तो विशेषेण, दण्डिनं छिनत्ति तदुपलक्षितम्, अन्यत्र शब्दार्थव्यवहारानभिज्ञादेकान्तजडादिति । एवमिहोपलक्षणमपोहः, तदभिधाने कथं तदुपलक्षिते वस्तुनि प्रवृत्तिः ? इत्यर्थः । द्वितीय विकल्पमधिकृत्याह-**अवस्तुत्वे** पुनरपोहस्य, तदभिधानेऽवस्त्वभिधाने, किमित्याह-**न किञ्चिदुक्तं स्याद्** भवेत्, कथमेवमवस्तुप्रतीतिपुरस्सरा-तत्प्रवृत्तिस्तस्मिन् वस्तुनि, प्रवृत्तिः ? । न च तत्प्रतिपत्तावपोहप्रतिपत्तौ सत्यां शब्देन, अर्थतोऽर्थापत्त्या तत्प्रतिबन्धान्यथानुपपत्तिलक्षणया, वस्तुप्रतिपत्तिः स्वलक्षणप्रतिपत्तिः । कुत इत्याह-**तुच्छत्वेन** हेतुना, तस्यैव-अपोहस्य, अप्रतिपत्तेः । इत्थं चैतदङ्गीकर्तव्यमित्याह-**अन्यथा**, एवमनभ्युपगमे, अवस्तुत्वविरोधात्, प्रक्रमादपोहस्य, तथा तस्य तुच्छस्यापोहस्य, तेन वस्तुना सह, अप्रतिबन्धात्

तादात्म्याद्ययोगेन, तथा, सामर्थ्यासिद्धेश्च तस्यैव तुच्छस्यापोहस्य। अनेन तद्व्यतिरिक्तविकल्पदोषोऽवसेयः, यदाह–**अव्यतिरिक्त्व इत्यादि**। अव्यतिरिक्तत्वे 'तुच्छापोहस्य वस्तुनोऽभ्युपगम्यमाने' इति प्रक्रमः, किमित्याह–**वस्तुन एवापोहत्वात्** कारणात्, तदभिधायकत्वं वस्त्वभिधायकत्वम्, शब्दानाम्, इति–एवम्, व्यर्थो निष्फलः, तत्प्रतिक्षेपाभिनिवेश शब्दानां वस्त्वभिधायकत्वप्रतिक्षेपाभिनिवेशः॥

**आह–न व्यर्थो बाह्यं स्वलक्षणं पुरोधाय व्यावृत्ति-व्यावृत्तिमतोस्तत्त्वाभिधानात्, न च तच्छब्दार्थः साक्षात्, अपि तु विकल्पपरिनिष्ठित आन्तरः, तस्माच्च धर्मिणो व्यावृत्तयस्तत्त्वान्यत्वेनानिर्वचनीया इति। न, इत्थमपि ततो वस्तुनि प्रवृत्त्यनुपपत्तेः, तत्प्रतिपत्त्यभावात्, एवमपि प्रवृत्तावतिप्रसङ्गात्, आन्तरार्थ एव शब्दस्य चरितार्थत्वादिति॥**

**आहेत्यादि**। आह परः, न व्यर्थो यथोदितोऽभिनिवेशः। कुत इत्याह-**बाह्यं स्वलक्षणं पुरोधाय** अग्रतः कृत्वा,व्यावृत्ति-व्यावृत्तिमतोस्तत्त्वाभिधानादेकत्वाभिधानाद् भवता। न च तच्छब्दार्थो बाह्यं स्वलक्षणम्, साक्षादव्यवधानेन, अपि तु विकल्पपरिनिष्ठित आन्तरः शब्दार्थः। तस्माच्च धर्मिण आन्तराद् विकल्पपरिनिष्ठितात्, किमित्याह–**व्यावृत्तयस्तत्त्वान्यत्वेनानिर्वचनीया** इति कृत्वा न व्यर्थस्तत्प्रतिक्षेपाभिनिवेश.' इति क्रिया। एतदाशङ्क्याह–**न, इत्थमपि ततः** प्रक्रमात् शब्दात्, किमित्याह–**वस्तुनि प्रवृत्त्यनुपपत्तेः**। अनुपपत्तिश्च, तत्प्रतिपत्त्यभावाद् वस्तुप्रतिपत्त्यभावात् ततः शब्दादिति। एवमपि ततः प्रतिपत्त्यभावेऽपि प्रवृत्तावभ्युपगम्यमानायाम्, किमित्याह–**अतिप्रसङ्गात्** सर्वत्र प्रवृत्त्यापत्त्या। आपत्तिश्च, सर्वत्र प्रतिपत्त्यभावेन। प्रतिपत्त्यभावश्च, आन्तरार्थ एव शब्दस्य चरितार्थत्वादिति भावनीयम्॥

दृश्य-विकल्प्यार्थैकीकरणाद्वस्तुनि प्रवृत्तिरिति चेत्। न, तदेकीकरणासिद्धेः, दृश्य-विकल्प्ययोरत्यन्तभिन्नत्वात्, साधर्म्यायोगात्, एकस्योभयानुभवितुरभावात्, तदा द्वयदर्शनाददर्शनविकल्पानुपपत्तेः-आद्यपक्षे भेदेनैवोभयप्रतिपत्तेः किमेकीकरणेन ?; चरमपक्षे च तदप्रतिपत्तेः कथं तेनैवैकीकरणम् ?, तद्भावेऽपि दृश्यस्य विकल्पो न, एकीकृतत्वाद्विकल्पमात्रतापत्तेः, तदवगमाद्वस्तुन्यप्रवृत्तिरेव। न वै स्वविभिन्नदृश्यस्य विकल्पेनात्मसात्करणमेकीकरणम्, अपि त्वस्यैवाध्यवसिततद्भावता, तथाहि-विकल्प्यमेव दृश्यमित्यध्यवस्य प्रवर्तत । इति एतदप्यनालोचितमनोहरम्, तस्यैवाध्यवसिततद्भावतासिद्धेः, अतदाभेन तद्भावाध्यवसायाविरोधात्, अतिप्रसङ्गात्, नीलाकारबोधेन पीताध्यवसायापत्तेः, इत्यसमञ्जसत्वेन व्यवहारोच्छेदप्रसङ्गात् ॥

दृश्येत्यादि । दृश्य-विकल्प्यार्थैकीकरणात् स्व-सामान्यलक्षणैकीकरणात्, वस्तुनि बाह्ये स्वलक्षणे, प्रवृत्तिरिति चेत्। एतदाशङ्क्याह-नेत्यादि । न नैतदेवम् । कुत इत्याह-तयोः दृश्य-विकल्प्ययोरेकीकरणासिद्धेः। आसिद्धिश्च, दृश्य-विकल्प्ययोः स्व-सामान्यलक्षणयोः, अत्यन्तभिन्नत्वात्। अत्यन्तभिन्नत्वे साधर्म्यायोगात्, साधर्म्यं चैकीकरणनिमित्तमित्यभिप्रायः। तथा, एकस्येत्यादि । एकस्य कस्यचित्, उभयानुभवितुः स्व-सामान्यलक्षणानुभवितुः प्रमातुः, अभावात् परपक्षे । तथा, तदेत्यादि । तदा तस्मिन्नेकीकरणकाले, द्वयं दृश्य-विकल्प्याख्यम्, तस्य दर्शना-दर्शने ते एव विकल्पावेताभ्यामनुपपत्तिरघटमानता ततस्तदेकीकरणासिद्धिः । एतदुक्तं भवति-दृश्य-विकल्प्यार्थैकीकरणकाले तद्द्वयदर्शनमदर्शनं वा स्यात् ? । तत्राद्यपक्षे द्वयदर्शनपक्षे, किमित्याह-भेदेनैव असंकीर्णत्वेनैव, उभयप्रतिपत्तेः प्रक्रमाद् दृश्य-विकल्प्यप्रतिपत्तेः, किमेकीकरणेन-प्रयोजनाभावाद् ?, न किञ्चिदित्यर्थः। चरमपक्षे तु द्वयादर्शनपक्षे तु, कि-

मित्याह—तदप्रतिपत्तेः सामर्थ्याद्धिकृतदृश्याप्रतिपत्तेः कारणात्, कथं, तेनैव दृश्येनैव, एकीकरणम्? अदर्शनाविशेषे किमित्यनेनैव? इति भावः । अभ्युच्चयमाह—तद्भावेऽपीत्यादिना । तद्भावेऽपि दृश्य-विकल्प्यार्थैकीकरणभावेऽपि, किमित्याह—दृश्यस्य स्वलक्षणस्य, वि-कल्प्येन सामान्यलक्षणेन, एकीकृतत्वात् कारणात्, विकल्प्यमात्रता-पत्तेर्हेतोः, तदवगमाद् विकल्प्यावगमात् कारणात्, वस्तुनि स्व-लक्षणे, अप्रवृत्तिरेव, तदनवगमादित्यर्थः । पराकूतमाह—न वायि-त्यादिना । न वै नैव, स्वविभिन्नदृश्यस्य विकल्प्यापेक्षया विकल्प्या-त्मनो विभिन्नदृश्यस्येत्यर्थः, विकल्प्येनात्मसात्करणमेकीकरणमिह गृह्यते, अपि त्वस्यैव विकल्प्यस्य, अध्यवसिततद्भावता विनिश्चित-दृश्यभावता। एतद्भावनायैवाह—तथाहीत्यादि । तथाहीति पूर्ववत् । विकल्प्यमेव दृश्यमित्यध्यवस्य विनिश्चित्य प्रवर्तत इति । एतदाशङ्क्या-ह—एतदप्यनालोचितमनोहरम् । कुत इत्याह—तस्यैव विकल्प्यस्य, अध्यवसिततद्भावताऽसिद्धेः । असिद्धिश्च, अतदाभेनातदाकारेण विक-ल्प्येन, तद्भावाध्यवसायविरोधाद् दृश्यभावाध्यवसायविरोधात् । विरो-धश्चातिप्रसङ्गात् । अतिप्रसङ्गश्च, नीलाकारबोधेन पीताध्यवसायापत्ते-रध्यवसिततद्भावतया । इति—एवम्, असमञ्जसत्वेन व्यवहारोच्छेद-प्रसङ्गात् 'एतदप्यनालोचितममनोहरम्' इति ॥

**किञ्च, कः खलु विकल्पमेव दृश्यमित्यध्यवस्यति ? । विकल्प एवेति चेत् । न, तत्र सामान्यावभासनात्; अन्यथा विकल्पत्वायोगात् । अन्य इति चेत् । न, आत्मवादापत्तेः, तत्तथाध्यवसायनिमित्ताभावाच्च । तथाविधशब्दात् तथाविधवि-कल्पजन्मैवाध्यवसिततद्भावतेति चेत् । अभ्युपगतं तर्हि शब्द-स्यार्थवाचकत्वम्, तथाहि-इदमेवास्य तद्वाचकत्वं यत्तथा तदा-कारविकल्पजनकत्वम्, तच्चेदिष्यत एव तथाविधात् ततस्तथा-विधविकल्पोत्पत्त्यभ्युपगमेनेति । एवं च तदेवास्य निर्व्याजम-**

**स्तु, किमनेनाकाशकुसुमोद्गमसमानेन दृश्य–विकल्प्यार्थैकीकरण-व्याजेन ? ॥**

दूषणान्तरमाह—**किञ्चेत्यादिना** किञ्च, कः खलु प्रमाता, विकल्पमेव दृश्यमित्यध्यवस्यति ? । विकल्प एवेति चेत्। एतदाशङ्क्याह–**न**, तत्र विकल्पे, सामान्यावभासनात्, अन्यथा दृश्याध्यवसाये सति, विकल्पत्वायोगात् अन्य इति चेत् विकल्पादन्यो विकल्प्यमेव दृश्यमित्यध्यवस्यति। एतदाशङ्क्याह–**न**, आत्मवादापत्ते स एव विकल्पादन्यो बोध आत्मेत्यापद्यते। दूषणान्तरमाह–**तत्तथाध्यवसायनिमित्ताभावाच्च**–तस्य विकल्प्यस्य, दृश्याध्यवसायनिमित्ताभावाच्च। **तथाविधेत्यादि**। तथाविधशब्दाद् विशिष्टविकल्पनिबन्धनात्, तथाविधविकल्पजन्मैव विशिष्टविकल्पोत्पाद एव, अध्यवसिततद्भावतेति चेत्। एतदाशङ्क्याह–**अभ्युपगतं तर्हि शब्दस्य अर्थवाचकत्वम्**। एतदेवाभिधातुमाह-**तथाहीत्यादिना**। तथाहीत्युपप्रदर्शने, इदमेवास्य शब्दस्य, तद्वाचकत्वमर्थवाचकत्वम्, यत्तथातन्निमित्तशब्दारूषितार्थप्रवृत्त्याद्यङ्गत्वेन, तदाकारविकल्पजनकत्वमर्थाकारविकल्पजनकत्वम्। **तच्चेदित्यादि**। तच्चेद् अर्थाकारविकल्पजनकत्वम्, यदीष्यते एव भवता। तथाविधाद् विशिष्टात्, तत शब्दात्, तथाविधविकल्पोत्पत्त्यभ्युपगमेन तन्निमित्तशब्दारूषितार्थप्रवृत्त्याद्यङ्गभूतविशिष्टविकल्पोत्पत्त्यभ्युपगमेन, इति। एवं च कृत्वा, तदेव अर्थवाचकत्वमेव, अस्य शब्दस्य, उक्तनीत्या निर्व्याजमपेतमायास्थानम्, अस्तु भवतु, किमनेनाकाशकुसुमोद्गमसमानेन निष्फलेनेत्यर्थः, दृश्य–विकल्प्यार्थैकीकरणव्याजेन मायास्थानेन ? ॥ 'ततश्च दृश्यविकल्प्यावर्थावेकीकृत्य तद्बलात् प्रवर्तते, न तु शब्दाद् वस्त्वेव प्रतिपद्य तस्य ततोऽनवगते.' इतिशब्दगडुमात्रमेव. पूर्वपक्षोदितं वच । कुत इति ?, एतदेव दूषयन्नाह–**वस्तु, न एव** बाह्यस्य, शब्देनावगते. कारणात्। अवगतिश्च–प्रतिबन्धभावात्। वस्तु–शब्दयोः प्रतिबन्ध-

माह–वाच्यवाचकलक्षणो हि शब्दार्थयोः प्रतिबन्धः । एतदेव भावयति–तथाहीत्यादिना । तथाहि–वाच्यस्वभावा अर्था घटादय., वाचकस्वभावाश्च शब्दा घटादिशब्दा, इति तज्ज्ञप्तिवाद –शब्दार्थे ज्ञप्तिवचनम् । अतत्स्वभावत्वे कथं शब्दादर्थप्रतीतिः ?, कथं वा न घटात् पट–इति परिभावनीयम् ।

ततश्च 'दृश्य–विकल्प्यावर्थावेकीकृत्य तद्बलात् प्रवर्तते, न तु शब्दाद् वस्त्वेव प्रतिपद्य, तस्य ततोऽनवगतेः' इति शब्दगडुमात्रमेव, वस्तुन एव शब्देनावगतेः, प्रतिबन्धभावात् । वाच्यवाचकलक्षणो हि शब्दार्थयोः प्रतिबन्धः; तथाहि–वाच्यस्वभावा अर्थाः, वाचकस्वभावाश्च शब्दा इति तज्ज्ञप्तिवादः ॥

यद्येवम्, कथं न सङ्केतमन्तरेणैव ततस्तदवगतिः ? । उच्यते–तथाविधक्षयोपशमाभावात्; न हि रूपप्रकाशनस्वभावोऽपि दीपोऽसति चक्षुषि तत् प्रकाशयति, चक्षुष्कल्पश्च क्षयोपशमः, स च सङ्केत-तपश्चरणभावनादिजन्यः, तथोपलब्धेः, सङ्केतादिभ्यः समुपजातक्षयोपशमादिभावानां नो लौकिकयतिमुनीनां शब्दादर्थाच्च सम्यग्वाच्यवाचकभावावगमात्; तथाहि-सर्वे एव सर्वज्ञाः सुमेरुप्रभृतींस्तच्छब्दवाच्यानेव प्रतिपद्यन्ते, तैरेव तथाप्ररूपणात् । अन्यैरेवं प्ररूपिता इति तथा प्ररूपणमिति चेत् । तेषामेव तथाप्ररूपणे को हेतुः ? । अन्यप्ररूपणेति चेत् । अत्रापि समानः प्रसङ्गः । समाधिरपि समान एवेति चेत् । तत्संबन्धसिद्धिः, सर्वैरेव तथा तथा तज्ज्ञानाभिधानात् । अनादौ संसारे कदाचित्कैश्चिदन्यथा सा कृतेति चेत् । नात्र प्रमाणम्, अतीन्द्रियत्वात् । विपर्ययेऽपि समानमेतदिति चेत् । न, इदानीन्तनप्रयोगतोऽसमानत्वसिद्धेः; अन्यथा धूम-धूमध्वजादिष्वपि समानमेतत्, तथा च नैरात्म्यादिभावनाया अपि सदा रागादिप्रहाणनिबन्धनत्वे नाश्वास इति यत्किञ्चिदेतत् ॥

आह–यद्येवं वाच्यवाचकलक्षणः शब्दार्थयोः प्रतिबन्धः, कथं न संकेतमन्तरेणैव ततः शब्दात्, तदवगतिः–अर्थावगतिः ? । एतदाशङ्क्याह–उच्यते–तथाविधक्षयोपशमाभावाद् न संकेतमन्तरेणैव ततस्तदवगतिः । एतदेव भावयति–नहि रूपप्रकाशनस्वभावोऽपि प्रदीपोऽसति चक्षुषि अन्धस्य तद् रूप प्रकाशयति, तद्दर्शनाभावात् । न च तस्यापि प्रकाशितं तदिति न्याय्यं वचः, दर्शननिमित्तस्वभावस्य प्रकाशनत्वाभ्युपगमात् । अतोऽनेकस्वभाव एव तस्मिंश्चक्षुष्मदादीनां दर्शनादर्शने नान्यथेति परिभावनीयमित्यलं-प्रसङ्गेन । प्रकृतं प्रस्तुमः–चक्षुष्कल्पश्च क्षयोपशमः । स चेत्यादि । स च क्षयोपशमः, संकेततपश्चरण–भावनादिजन्यः । कुतः ?, इत्याह–तथोपलब्धेः संकेतादिभावेऽर्थावगत्याः कार्यतः क्षयोपशमोपलब्धेः । तथाचाह–संकेतादिभ्यः । आदिशब्दात् तप-श्चरण-भावनादिग्रहः, समुपजातक्षयोपशमादिभावानाम्–आदिशब्दात् क्षायिकभावग्रहः, लौकिकयतिमुनीनाम्–मुनयो वीतरागा एव, शब्दादर्थाश्च सकाशात्, केवलकेवलादेव, सम्यग् अवैपरीत्येन, वाच्यवाचकभावावगमात् कारणात्, तथोपलब्धेरिति सिद्धम् । तथाहीत्यादि । तथाहीत्युपप्रदर्शने, सर्वे एव सर्वज्ञा भगवन्तो बुद्धाः शाक्यमुन्यादयः, सुमेरुप्रभृतीन् पदार्थान्–प्रभृतिग्रहणाज्जम्बूद्विपादिग्रहः, तच्छब्दवाच्यानेव सुमेर्वादिशब्दवाच्यानेव प्रतिपद्यन्ते । कुतः ?, इत्याह–तैरेव सुमेर्वादिशब्दैः, तथा विशिष्टयैवानुपूर्व्या सुमेरु–जम्बूद्विपादिलक्षणया प्ररूपणात्, अन्यैः सर्वज्ञैः कालान्तरवर्तिभिर्विपश्यादिभिः, एव सुमेर्वादिशब्दवाच्यतया प्ररूपिता इति कृत्वा । तथा विशिष्टयैवानुपूर्व्या सुमेरु–जम्बूद्विपादिलक्षणया प्ररूपणमिति चेत् । एतदाशङ्क्याह–तेषामेव अन्येषां तथाप्ररूपणे को हेतु. ? । अन्यप्ररूपणेति चेत्, अन्ये कल्पान्तरवर्तिनो गृह्यन्ते । एतदाशङ्क्याह–अत्रापि अन्यप्ररूपणायाम्, समानःप्रसङ्गः–तेषामेव तथाप्ररूपणे को हेतुरि-

स्ययम् । समाधिरपि परिहारोऽपि समान एवेति चेत्—अन्यप्ररूपणाहेतुरित्ययम् । एतदाशङ्क्याह—**तत्संबन्धसिद्धिः**—तयोः सुमेर्वादिपदार्थे—सुमेर्वादिशब्दयोः संबन्धसिद्धिः । कुतः ?, इत्याह—**सर्वैरेव** कल्पान्तरवर्तिभिरपि सर्वज्ञैः, तथा सुमेर्वादिशब्दवाच्यत्वादिना प्रकारेण, तज्ज्ञानाभिधानात् सुमेर्वादिज्ञानाभिधानात् । अनादौ संसारे कारणाभावात् कार्याभावेन कदाचित् कैश्चित् सर्वज्ञैः अन्यथा सा प्ररूपणा बिन्दुकादिशब्दप्रयोगरूपा कृतेति चेत् । एतदाशङ्क्याह—**नात्र प्रमाणम्**, अन्यथा कृतेति । कुतः ?, इत्याह—**अतीन्द्रियत्वाद्** अस्य वस्तुनः । विपर्ययेऽपि न कृतेत्यस्मिन् समानमेतद्, नात्र प्रमाणमित्यादि यदुक्तमिति चेत् । एतदाशङ्क्याह—**नेत्यादि** । न नैतदेवम्, इदानींतनप्रयोगतः शाक्यमुनेः सुमेर्वादौ सुमेर्वादिशब्दप्रयोगतः कारणाद् असमानत्वसिद्धेः—अधिकृतविपर्यये अतत्स्वभावात् सकृदपि तथा तद्भावविरोध इत्याभिप्रायः । एतदुक्तं भवति—संकेतद्वारेणापि सुमेर्वादौ सुमेर्वादिशब्दप्रयोगो नाऽतत्स्वभावत्वे तयोर्भवति, तत्स्वभावत्वे च सिद्ध एव मदीयोऽभ्युपगमस्तदानीमपि तयोस्तत्स्वभावत्वादिति । विपक्षे बाधामाह—**अन्यथेत्यादि** । अन्यथैवमनभ्युपगमे, धूम—धूमध्वजादिष्वपि हेतु—फलस्वभावेषु, समानमेतदनादौ संसारे व्यभिचारचोदनमिति परिभावनीयम् । एवं लौकिकाविनाभावनियमाऽनियममभिधाय लोकोत्तरमेनमधिकृत्याह—**तथाचेत्यादि** । तथाच एवं च सति, नैरात्म्यादिभावनाया अपि सदा रागादिप्रहाणनिबन्धनत्वे । किमित्याह—**अनाश्वासः**—सुमेर्वादिशब्दस्येव सुमेर्वादिनिबन्धनत्वे, इति एवम्, यत्किञ्चिद्-असारम्, एतत्—"विपर्ययेऽपि समानमेतत्" इत्यादि ॥

**एवमपि सङ्केततो वाच्यान्तरवाचकत्वं शब्दस्यायुक्तमिति चेत् । न, ततश्चित्रशक्तिमत्त्वेन योगात्, तथा च सर्वे शब्दाः**

प्रायः सर्वार्थवाचकशक्तिमन्तः, सर्वे चार्थाः सर्वशब्दवाच्यशक्तियुक्ता इति विचित्रक्षयोपशमादिसहकारियोगतस्तथा तथा प्रवर्तन्त इति न काचिद् बाधा। एतेन 'न रूपप्रकाशनस्वभावो दीपोऽरूपं प्रकाशयति, तद्वदेव घटादिवाचकस्वभावः शब्दः प्रयोगादपि नाघटं प्रकाशयेत्' इत्यपि प्रत्युक्तम्, विचित्ररूपप्रकाशनस्वभावदीपवदेव चित्रवाच्यवाचकस्वभावत्वात् शब्दस्य, अशेषाभिधानेऽपि सहकारिक्षयोपशमभेदतोऽर्थितादिभेदेनेव प्रदीपात् प्रकाश्ये वाच्ये प्रतिपत्तिः। न च दीपप्रकाशिता अपि सर्वे निम्नोन्नतादयः सर्वैरेव प्रतीयन्ते, चक्षुःसामर्थ्यानुरूपं प्रतीतिभेदोपलब्धेः। इति शब्दा-ऽर्थयोर्वाच्य-वाचकलक्षणप्रतिबन्धसिद्धिः। तादात्म्यादिविचारविषयास्तु दोषा अनभ्युपगमादेव न नो बाधायै भवन्ति॥

एवमपि सति, संकेततः संकेतेन, वाच्यान्तरवाचकत्वं शब्दस्य घटादेः पटादिवाचकत्वमित्यर्थः, अयुक्तमन्याय्यमितिचेत्। एतदाशङ्क्याह–नेत्यादि। न नैतदेवम्, ततः संकेततः, चित्रशक्तिमत्त्वेन शब्दस्येति प्रक्रमः, योगाद् वाच्यान्तरवाचकत्वस्य। एतद्भावनायाह–तथाचेत्यादि। तथा च सर्वे शब्दा घटादयः, प्रायो बाहुल्येन, स्ववाच्यं वन्ध्यशब्दान् मुक्त्वा प्रधानादीन् सर्वार्थवाचकशक्तिमन्तः, तथाफलदर्शनात्, सर्वे चार्थाः घटादयः सर्वशब्दवाच्यशक्तियुक्ताः, उक्तादेव हेतोः, इत्येवं विचित्रक्षयोपशमादिसहकारियोगतः–आदिशब्दात् तत्तत्प्रयोजन–देश–कालादिग्रहः, तथा तथा तेन तेन प्रकारेण प्रवर्तन्ते, इति एवम्, न काचिद् बाधा संकेततो वाच्यान्तरवाचकत्वे शब्दस्य। एतेन अनन्तरोदितेन, "न रूपप्रकाशनस्वभावो दीपोऽरूपं प्रकाशयति रसादि, तद्वदेव एवमेव, घटादिवाचकस्वभावः शब्दः प्रयोगादपि संकेतेन, नाघटं प्रकाशयेद् अभिदध्यात्" इत्याद्यपि प्रत्युक्तम्। कथम्?, इत्याह–चित्ररूपप्रकाशन-

स्वभावदीपवदेव । सितेतराद्यपेक्षया चित्रवाच्य-वाचकस्वभावत्वाच्छब्दस्य, अशेषाभिधानेऽपि तत्त्वेन पुनः, सहकारिक्षयोपशमभेदतः अर्थितादिभेदेनैव, प्रदीपादिति निदर्शनम्, प्रकाश्ये सितादौ, वाच्ये प्रतिपत्तिर्घटादौ । चित्रास्तरणे दीपात् समं सितादिप्रतिपत्तिर्नैवं शब्दाद् वाच्येष्वित्येतन्निरासायाह-न च दीपप्रकाशिता अपि सर्वे निम्नोन्नतादयः सर्वैरेव प्रतीयन्ते प्रमातृभिः । कुतः ?, इत्याह-चक्षुःसामर्थ्यानुरूपं प्रतीतिभेदोपलब्धेः, इति एवम्, शब्दार्थयोर्वाच्यवाचकलक्षणसम्बन्धसिद्धिः । तादात्म्यादिविचारविषयास्तु दोषाः-क्षुरिकादिशब्दोच्चारणे वदनपाटनादयः, अनभ्युपगमादेव तादात्म्यादेः । किमित्याह-न नो बाधायै भवन्ति ॥

यच्चोक्तम्-'परमार्थैकतानत्वे च शब्दानामनिमित्ता न स्यात् प्रवृत्तिरर्थेषु चित्रतन्त्रान्तरगतेषु, परस्पराविरोधित्वेन सर्वेषां तथाभावात्' इत्येतदप्ययुक्तम् । मृषाभाषावर्गणोपादानशब्दानां निमित्तभेदवैचित्र्येण बहुभेदानामनर्थकत्वाभ्युपगमात्, ते हि तदर्थप्राप्त्यादिप्रसवविकला वन्ध्याबला इव केवलं तथाविधसंवेदनसंभोगमात्रफला एव, स्वरूपालोचनादिभ्यस्तु प्रमाणादितरस्यार्थवच्छब्देभ्यस्तद्विशेषावसायः, तथा हि दृश्यन्ते एव केचित् विमलमतयः श्रवणमात्रादेवानृतत्वादियाथात्म्यमवधारयन्तः ध्वनेः,अपोहमात्राभिधायकत्वेऽपि चैषां समान एवायं प्रसङ्गः,तथाविधाऽपोहस्याऽपि सर्वत्राभावात्, अप्रधानाद्यपोहस्य क्वचिदनुपपत्तेः, सर्वभावानामेव परमार्थतोऽप्रधानादिरूपत्वात्, बुद्धिपरिकल्पिततदपोहाभ्युपगमे च तदन्यतो विशेषात्, रूपादिज्ञानाद्यपोहस्यातथाभूतत्वात्, वस्तुबलप्रवृत्ते रूपादीनां रसादिभ्यो भेदात् तथाविधबुद्धीनामपि पारम्पर्येण तन्निमितत्वाभ्युपगमात्, "वस्तुभेदो वासना, प्रकृतिश्च तस्याः आश्रयः" इत्यादिवचनप्रामाण्यात् प्रधानादिबुद्धिभेदसिद्धेरिति ॥

**यच्चोक्तमित्यादि** । यच्चोक्तं पूर्वपक्षग्रन्थे–'परमार्थैकतानत्वे च शब्दानामनिमित्ता न स्यात् प्रवृत्तिरर्थेषु चित्रतन्त्रान्तरगतेषु प्रधानादिषु, परस्पर विरोधित्वेन हेतुना, सर्वेषां तथाऽभावात् केवलप्रधानादित्वेनाभावात्' इत्येतदपि अयुक्तं पूर्वपक्षोक्तम्। कुतः ?, इत्याह–**मृषाभाषावर्गणोपादानशब्दानां** प्रधानादीनाम्, निमित्तभेदवैचित्र्येण तदारम्भकपुद्गलादिवैचित्र्येण हेतुना बहुभेदानाम् । किम् ?, इत्याह–**अनर्थकत्वाभ्युपगमात्** एतदपि अयुक्तमिति। **ते हीत्यादि** ते यस्मात् प्रधानादिशब्दाः, तदर्थप्राप्त्यादिप्रसवविकलाः प्रधानाद्यर्थप्राप्त्यादि एव प्रसवस्तद्विकलाः, आदिशब्दादर्थक्रियादिग्रहः । वन्ध्याबला इव निदर्शनम् । केवलं तथाविधसंवेदनमेव समारोपतो निर्विषयसंवेदनमेव, संभोगमात्रमिति विग्रहः, तदेव फलं येषां ते तथाविधा इति । न हि वन्ध्यायाः संभोगेऽपि अपत्यमुत्पद्यते, नचासौ न संभोगः । एवं न तत्संवेदनमर्थप्राप्त्यादिमत्, न च न संवेदनमिति भावनीयम् । कथमितरेभ्यः तद्विशेषावसायः ?, इत्याह–**स्वरूपालोचनादिभ्यः** पुनः, आदिशब्दात् तद्विषयपूर्वापरविरोधादिग्रहः । प्रमाणादिव इतरस्य प्रमाणाभासस्य, अर्थवच्छब्देभ्यो जीवादिवाचकेभ्यः सकाशात् । किमित्याह–**तद्विशेषावसायः** तेषां मृषाभाषावर्गणोपादानानामनर्थकप्रधानादिशब्दानां विशेषावसाय इति । न चैतदलौकिकमित्याह–**तथाहीत्यादि** । तथाहि इति पूर्ववत्, दृश्यन्त एव केचिद् विमलमतयः श्रोतारः, श्रवणमात्रादेव सकाशात्, अनृतत्वादियाथात्म्यमवधारयन्तो ध्वनेः शब्दस्य। दोषान्तरमाह–**अपोहाभिधायकत्वेऽपि चैषां** शब्दानामिति प्रक्रमः । किमित्याह–**समान एवायम्** अनन्तरोदितः प्रसङ्गः । कुत इत्याह–**तथाविधापोहस्यापि** अपोह्यापोढाश्रयस्य, सर्वत्राभावात्, अभावश्च अप्रधानाद्यपोहस्य क्वचिदपि प्रधानादावनुपपत्तेः । कथमित्याह–**सर्वभावानामेव** तत्त्वतः परमार्थतः, अप्रधा-

नादिरूपत्वात्, बुद्धिपरिकल्पिततदपोहाभ्युपगमे च प्रधानाद्यपोहाङ्गीकरणे च। किमित्याह—**तदन्यतः** अपोहाद् विशेषात्। विशेषमेवाह—**रूपादीत्यादिना**। रूपादिविज्ञानाद्यपोहस्य बुद्धिपरिकल्पितस्यापि अरूपविज्ञानं न भवतीति रूपविज्ञानमित्येवंभूतस्य अतथाभूतत्वात् प्रधानाद्यपोहरूपेणाभूतत्वादित्यर्थः। कथमित्याह—**वस्तुबलप्रवृत्तेः** इयं च रूपादीनां वस्तुसताम्, रसादिभ्यो भेदात्। तथा विधतद्बुद्धीनामपि विकल्पिकानाम्, पारम्पर्येण तन्निमित्तत्वाभ्युपगमाद् रूपादिनिमित्तत्वाभ्युपगमात्। एतमेवाह—वस्तुभेदः स्वलक्षणरूपो वासना, प्रकृतिश्च बोधनिबन्धना तस्या रूपादिसामान्यबुद्धेः आश्रयः, इत्यादिवचनप्रामाण्यात्। किमित्याह—**प्रधानादिबुद्धिभेदसिद्धेः** तस्या एव, आदिशब्दादीश्वरादिबुद्धिग्रह इति। अपोहमात्राभिधायकत्वेऽपि चैषां समान एवायं प्रसङ्ग इति सर्वत्र क्रियायोगः॥

न चासामप्यधिकृतभेद एवाश्रयः, अतत्प्रतिभासत्वात्, तद्रूपाश्च ततस्तदतत्प्रतिभासत्वानुपपत्तेरतिप्रसङ्गात्, रूपाद्यन्यतमभेदादेव बुद्धीनां रसादिप्रतिभासत्वापत्तेः, तदसत्त्वप्रसङ्गादित्युक्तम्। न च वासनाप्रकृत्युपादानभेदतस्तत एवासामतत्प्रतिभासता, तस्य तत्त्वतो निरंशत्वात्, अनेकसहकारित्वाभावात्, यथाकथञ्चिदेकसहकारिस्वभावत्वे तदन्यसहकारिस्वभावत्वविरोधात्, स्वभावभेदानुपपत्तेः, तमन्तरेण फलभेदायोगादिति। केवलवासनाप्रकृतिनिबन्धनत्वे तु प्रधानादिबुद्धीनामागत एव मदीयोऽभ्युपगमः, तदन्यापोहबुद्धीनामतथाविधत्वात्, तथाविधापोहस्यापि सर्वत्राभाव एवेति युक्तिसिद्धेः। तद्विषयशब्दानां चोपादानभेदात्, अन्यथाविषयभेदाभावात् तत्तत्स्वभावत्वेन तद्वाचकत्वापत्तेरिति सूक्ष्मधिया भावनीयमित्यलं प्रपञ्चेन॥

न चासामपि प्रधानादिबुद्धीनामधिकृतभेद एव रूपादिस्वलक्षणरूप आश्रयः। कुत इत्याह–**अतत्प्रतिभासत्वात्** अरूपादिप्रतिभासत्वात् प्रधानादिबुद्धीनाम्, तद्रूपाच्च रूपादिरूपाच्च, ततोऽधिकृतभेदात्। किमित्याह–**तदतत्प्रतिभासत्वानुपपत्तेः** तासां प्रधानादिबुद्धीनाम्, अतत्प्रतिभासत्वानुपपत्तेः अरूपादिप्रतिभासत्वानुपपत्तेरित्यर्थः, अनुपपत्तिश्च अतिप्रङ्गात्। एनमेवाह–**रूपाद्यन्यतमभेदादेव** सकाशात्, बुद्धीनां रसादिप्रतिभासत्वापत्तेः प्रधानादिप्रतिभासवत्। ततः किमित्याह–**तदसत्त्वप्रसङ्गाद्** रसाद्यसत्त्वप्रङ्गात्, इत्युक्तं प्राक्। **नचेत्यादि**। न च वासनाप्रकृत्युपादानभेदतः प्रधानादिवासनाप्रकृत्युपादानभेदेन, तत एव वस्तुभेदाद् रूपादेः, आसां प्रधानादिबुद्धीनाम्, अतत्प्रतिभासता अरूपादिप्रतिभासता। कुतो न चेत्यादि, तस्य वस्तुभेदस्य, तत्त्वतः परमार्थत, निरंशत्वाद् एकस्वभावत्वाद्, अनेकसहकारित्वाभावात्, अभावश्च यथाकथंचिदेकसहकारिस्वभावत्वे रूपादिबुद्धिसहकारिस्वभावत्वे, तदन्यसहकारिस्वभावत्वविरोधाद् विधानादिबुद्धिसहकारिस्वभावत्वविरोधात्, विरोधश्च स्वभावभेदानुपपत्तेः। न च यदेव रूपादिबुद्धिसहकारिस्वभावत्वं तदेव प्रधानादिबुद्धिसहकारिस्वभावत्वमिति स्वभावभेदः, तमन्तरेण स्वभावभेदं विना, फलभेदायागाद् रूपादिप्रधानादिबुद्धिफलभेदायोगात्, नच वासनाप्रकृत्युपादानभेदतस्त एवासामतत्प्रतिभासतेति सर्वत्र क्रियायोगः। केवलवासनाप्रकृतिनिबन्धनत्वे पुनः प्रधानादिबुद्धीमाम्, किमित्याह–**आगत एव मदीयोऽभ्युपगमः**। कथमित्याह–**तदन्येत्यादि**। तदन्यान्यापोहबुद्धीनामरूपाद्यपोहबुद्धीनाम्, अतथाविधत्वात्–अप्रधानाद्यपोहबुद्धिसदृश्यस्तथाविधा न तथाविधा अतथाविधास्तद्भावस्तस्माद् अप्रधानाद्यपोहबुद्धिविलक्षणत्वादित्यर्थः, तथाविधापोहस्यापि प्रक्रमाद् अपोह्यापोढाश्रयस्य वस्तुबलप्रवृत्तस्य, सर्वत्र प्रधानादौ अभाव एवेति युक्तिसिद्धेः। तद्विषये शब्दानां च प्रधाना-

दिरूपाणाम् । किमित्याह–उपादानभेदात्, अन्यथा उपादानभेदमन्तरेण, विषयभेदाभावाद् अपोह्यापोढाश्रयेतरापोहविषयभेदाभावात् । एनमेव विषयभेदमाह–तत्तत्स्वभावत्वेन तेषां विवक्षितापोह्याभिधायकोपादानस्वभावत्वेन हेतुना, तद्वाचकत्वापत्तेर्विवक्षितापोहवाचकत्वापत्तेः, आगत एव मदीयोऽभ्युपगम इति सर्वत्र क्रियायोग इति । एतत् सूक्ष्मधिया भावनीयम्–नह्यभिन्नाभिधायकोपादानस्वभावानां शब्दानामपोह्यापोढाश्रयेतरापोहवाचकत्वं न्याय्यमित्यलं प्रसङ्गेन, नाभिन्नोपादानस्वभावाः पुरुषाः अपि कृत्येतरभावे तयोः प्रवर्तन्ते, तत्प्रवृत्तौ च तद्भिन्नोपादानस्वभावतेतिभावना ॥

**अतीताजातयोश्च सर्वथाऽसत्त्वमसिद्धम्, सतः सर्वथाऽसत्ताऽयोगात्, तदुत्पत्त्याद्यापत्तेः, असतश्च सत्ताविरोधात्, अतिप्रसङ्गादिति तत्तथाभिधाने न कश्चिद्दोषः । न च न स्यादनृतार्थता वाचः कस्याश्चिदपि, मृषाभाषावर्गणोपादानायास्तथात्वाविरोधात्, तस्या ह्यर्थभावेऽपि भावात्, परपक्षेऽपि तद्विवक्षाभेदोपपत्तेः, अन्यथा तत्सत्यत्वप्रसङ्गात्, वाच्याभेदात्, तद्भेदे च समानतापत्तेरिति ॥**

दोषान्तरपरिजिहीर्षयाह–अतीतेत्यादि । अतीताजातयोश्च प्रक्रमाद् भावयोः, सर्वथा सर्वैः प्रकारैः, असत्त्वमसिद्धम् । कुत इत्याह–सतः सर्वथाऽसत्ताऽयोगात्, अयोगश्च–तदुत्पत्त्याद्यापत्तेः असत उत्पत्त्याद्यापत्तेरुत्पत्तिनाशेतरोन्मज्जनप्रसङ्गादित्युक्तं प्राक् । प्रकृतं समर्थनायैवाह–असतश्च सत्ताविरोधात् प्रतिनियतशक्त्यभावेनातिप्रसङ्गात्, असकृद् भावितमेतत् । इति एवम्, तत्तथाभिधाने तयोरतीताजातयोस्तथा तेनप्रकारेणाभिधाने, न कश्चिद् दोषः । दूषणान्तरमेव परिहरन्नाह–न च न स्यादनृतार्थता वाचः कस्याश्चिदपि किन्तु स्यादेव । कुत इत्याह–मृषाभाषावर्गणोपादानायाः अस्याः, तथात्वाविरोधात् अनृतार्थत्वाविरोधात्, तस्या हि मृषाभाषावर्गणोपादानाया वाचः, अर्थाभावेऽपि भावात् । एवं स्वपक्षमभि-

कृत्य दोषाभावमभिधाय परपक्षेऽपि तुल्यतामाह—परपक्षेऽपि बौद्ध-मते, तद्विवक्षाभेदोपपत्तेः—तस्या अनृतवाचो विवक्षाभेदोपपत्तेः, अन्यथा विवक्षाभेदमन्तरेण, तत्सत्यत्वप्रसङ्गात्—अस्या अनृतवाचः सत्यत्वप्रसङ्गात्। प्रसङ्गश्च—वाच्याभेदात् उपादानहेत्वभेदेन, तद्भेदे च वाच्यभेदे च, समानतापत्तेः—'मृषाभाषावर्गणोपादानायास्तथात्वाविरोधात्' इत्यनेन 'न च न स्याद् अनृतार्थता वाचः कस्याश्चिदपि' इति क्रिया ॥

यच्चोक्तम्—'सङ्केतवशाच्च शब्दात्प्रतीतिस्तस्य चापोहमन्तरेणान्यत्र कर्तुमशक्यत्वात्' इत्यादि, । तदप्यसारम्, अपोहेऽपि सङ्केतस्य कर्तुमशक्यत्वात्। त्रिविधो हि वोऽपोहः—एकस्तावद्व्यावृत्तं स्वलक्षणमेव—अन्योऽपोह्यतेऽस्मिन्निति कृत्वा। यदधिकृत्याह—"स्वभावपरभावाभ्यां यस्माद्व्यावृत्तिभागिन" इति। अयं च शब्दलिङ्गाश्रयस्य व्यवहारस्याश्रयत्वेन व्यवस्थाप्यते,न तु शब्दवाच्यतयेति नात्र सङ्केतः। अन्यथा व्यवच्छेदमात्रं द्वितीयः, अन्यापोहनमन्यापोह इति कृत्वा यः सर्वत्राभेदेन वः पूर्वाचार्यैर्व्यवस्थाप्यते, प्रतिषेधमात्रस्य सर्वत्राविशेषात्, अत्रापि न सङ्केतो निःस्वभावत्वात्। आह च न्यायवादी—

"अर्थानां यच्च सामान्यमन्यव्यावृत्तिलक्षणम्।
यन्निष्ठास्त इमे शब्दा न रूपं तस्य किञ्चन ॥" इति।

विकल्पबुद्धिप्रतिभासस्तु तृतीयः, अन्योपोह्यतेऽनेनेति कृत्वा, अयं च शब्दस्य निबन्धनतयाभ्युपगम्यते। यदधिकृत्याह—"विकल्पयोनयः शब्दा विकल्पाः शब्दयोनय" इति। अयमप्युपप्लवत्वान्नास्त्येवेति कथमत्र सङ्केतः?।

पूर्वपक्षान्तरपरिहारायाह—यच्चोक्तं पूर्वपक्षे—'संकेतवशात् शब्दात् प्रतीतिस्तस्य च संकेतस्य,अपोहमन्तरेणान्यत्र वस्तुनि कर्तुमशक्यत्वात्' इत्यादि, तदप्यसारम्। कथमित्याह—अपोहेऽपि संकेत-

स्य कर्तुमशक्यत्वात् तुल्यदोषत्वादित्यर्थः। एतदेवाह-**त्रिविधो हि वोऽपोह** इत्यादिना त्रिविधो युष्माकं यस्मादपोहः-एकस्तावद् व्यावृत्तं स्वलक्षणमेव, कथमिह शब्दार्थः ?, इत्याह- अन्यः पदार्थः, अपोह्यते निषिध्यतेऽस्मिन्नितिकृत्वा। यदधिकृत्याह न्यायवादी-स्वभावपरभावाभ्यां यस्मात् कारणाद् व्यावृत्तिभागिनः-व्यावृत्तिं भजन्ते तच्छीलाश्च, अयं चैवं भूतोऽपोहः व्यावृत्तस्वलक्षणरूपः, शब्दलिङ्गाश्रयस्य व्यवहारस्य प्रवृत्त्यादेः, आश्रयत्वेन व्यवस्थाप्यते परम्परामूलया, न तु न पुनः, शब्दवाच्यतयेति कृत्वा नात्रापोह-संकेतः। अन्यव्यवच्छेदमात्रं तुच्छं द्वितीयः। इहापि शब्दार्थमाह-**अन्यापोहनमन्यापोह इति कृत्वा यः सर्वत्राभेदेन वो** युष्माकम्, पूर्वाचार्यैर्भदन्तादिन्नप्रभृतिभिः, व्यवस्थाप्यते-"अयमप्यघटो न भवति, अयमप्यघटो न भवति" इत्यादिना। अत एवाह-**प्रतिषेधमात्रस्य सर्वत्राविशेषात्** अत्राप्यपोहे, न संकेतो निःस्वभावत्वादस्य। आह च न्यायवादी धर्मकीर्तिः-अर्थानां घटादीनाम्, यच्च सामान्यमन्यव्यावृत्तिलक्षणम्। यन्निष्ठाः ते इमे शब्दा घटादयस्तस्य रूपं न किंचनेति निःस्वभावत्वसिद्धिः। विकल्पबुद्धेः प्रतिभासो विकल्पबुद्धिप्रतिभासः, विकल्पबुद्धिप्रतिभासस्तु स्थूलाकारस्तृतीयोऽपोहः। शब्दार्थमिहाह-अन्योऽपोह्यतेऽनेनेति **कृत्वा अयं वापोहः**, शब्दस्यनिबन्धनतयाऽभ्युपगम्यते परैः। यदधिकृत्याह आचार्यः-**विकल्पयोनयः** विकल्पकारणा शब्दाः, विकल्पाः शब्दयोनय इति। अयमपि अपोहः, उपप्लवात् कारणात्, नास्त्येव इत्येवं कथमत्र संकेतः ?॥

**बहिरयं नास्ति विकल्पबुद्धिप्रतिभासस्त्वस्त्येव, तत्र सङ्केत इति चेत्। कोऽयं विकल्पबुद्धिप्रतिभासः ?। एते वृक्षादय इति तदेकाकारतैवेति चेत्। किमियं तत्स्वसंवित्तेर्भिन्नाभिन्नेति वाच्यम् ?। अनिर्वचनीयेति चेत्। कथं तत्र सङ्केतः ?। तद्भेदाभेदाभ्याम-**

निर्वचनीया नान्यथेति चेत् । किमिदमन्यथात्वं नाम ? । संवृत्त्या भाव इति चेत् । न तर्हि परमार्थेनायमिति न तत्र सङ्केतः । अवस्तुन्येवायमिति चेत् । न, वस्तुप्रतीतेः । भ्रान्ता खल्वियमिति चेत् । नात्र प्रमाणम् । इतरत्रापि समानमिति चेत् । न, तदनुभवफलसिद्धेः । इतश्च न विकल्पबुद्धिप्रतिभासे सङ्केतः, स्थितास्थितविकल्पायोगात्-न स्थिते, अक्षणिकत्वप्रसङ्गात्, नास्थिते, कर्त्तुमशक्यत्वात्; तथा, गृहीतेतरविकल्पानुपपत्तेः-न गृहीते, सन्तानान्तरवर्तिनोऽस्य ग्रहीतुमशक्यत्वात्' नागृहीते, अतिप्रसङ्गात्; तथा, व्यवहारसमर्थाऽसमर्थालोचनायोगाच्च, व्यवहारसमर्थत्वे, तस्यार्थक्रियासमर्थत्वेन वस्तुत्वाद्बाह्येऽनिमित्तो द्वेषः, तदसमर्थत्वे तु सङ्केतवैयर्थ्यम्; तद्वाच्यावाचकस्वभावत्वचिन्तासिद्धेश्च-तच्छब्दवाच्यस्वभावत्वे, तस्य शब्दस्यापि तद्वाचकस्वभावत्वमिति वास्तवसम्बन्धसिद्धिः, अन्यथा सङ्केताभावः, अतिप्रसङ्गात् ।

बाहिरयं नास्त्यर्थे विकल्पबुद्धिप्रतिभासस्तु स्वरूपेण अस्त्येव, तत्र संकेत इति चेत् । एतदाशङ्क्याह-कोऽयं विकल्पबुद्धिप्रतिभासः ? 'एते वृक्षादयः' इति एवम्, तदेकाकारतैव विकल्पबुद्ध्येकाकारतैवेति चेत् । एतदाशङ्क्याह-किमियम्-अधिकृतैकाकारता ?, तत्स्वसंवित्तेरधिकृताविकल्पबुद्धिस्तु संवित्तेर्भिन्ना अभिन्नेति वाच्यम् ? । भेदे बहिस्तदभावः, अभेदे स्वलक्षणवाच्यतेति । उभयपरिहारेणाह-अनिर्वचनीयेति चेत् । एतदाशङ्क्याह-कथं तत्र अनिर्वचनीयायां संकेत ?, तद्भेदाभेदाभ्यां तस्यास्तत्स्वसंवित्तेर्भेदाभेदाभ्यामनिर्वचनीया तदेकाकारता,नान्यथेति चेत् । एतदाशङ्क्याह-किमिदमन्यथात्व नाम ?, यदधिकृत्य उच्यते नान्यथेति, संवृत्या अपरमार्थेन, भाव इति चेत् अन्यथात्वम् । एतदाशङ्क्याह-न तर्हि परमार्थेनायं भाव इति । न तत्र सांवृते भावे संकेतः, अवस्तुत्वात् तस्येति भावः । अवस्तुन्येवायं संकेत इति चेत् । न, वस्तुप्रतीतेः अर्थक्रियाकारिणि अध्यवसायादित्यर्थः ।

भ्रान्ता खल्वियमिति चेद् वस्तु प्रतीतिः । एतदाशङ्क्याह—नात्र भ्रान्ततायां प्रमाणम्, अधिकृतप्रतीतेः इतरत्रापि तदभ्रान्ततायामपि समानमेतत्, यदुत नात्र प्रमाणमिति चेत्। एतदाशङ्क्याह—नेत्यादि न नैतदेवम्, तदनुभवफलसिद्धेः—तस्याः प्रक्रमात् शब्दनिमित्तवस्तुप्रतीतेः, अनुभवश्चार्थाध्यवसायलक्षणः, फलं च तत्त्ववृत्त्यादि, इति विग्रहः, ताभ्यां सिद्धिस्ततः । दूषणान्तरमाह—इतश्चेत्यादिना इतश्च अस्माच्च कारणात् ,न विकल्पबुद्धिप्रतिभासे संकेतः । कुत इत्याह-स्थितास्थितविकल्पायोगात् । एनमेवाह-न स्थिते विकल्पबुद्धिप्रतिभासे संकेतः । कुत इत्याह-अक्षणिकत्वप्रसङ्गात् उत्पन्नस्य स्थितिरिति कृत्वा । नास्थिते । कुत इत्याह—कर्तुमशक्यत्वात् तथाहि-अस्थितो न किंचित् कथं तत्र संकेतः ? । उपपत्यन्तरमाह-तथा,गृहीतेतरविकल्पानुपपत्तेः न विकल्पबुद्धिप्रतिभासे संकेत इति । एतदेवाह—न गृहीते बुद्धिविकल्पप्रतिभासे संकेतः । कुत इत्याह—सन्तानान्तरवर्तिनोऽस्य विकल्पबुद्धिप्रतिभासस्य,गृहीतुमशक्यत्वात् । नागृहीते । कुत इत्याह-अतिप्रसङ्गात् अगृहीतत्वाविशेषेण यत्र क्वचित् शब्दस्य संकेतापत्तेः । उपपत्त्यन्तरमेवाह—तथा, व्यवहारसमर्थासमर्थालोचनायोगाच्च न विकल्पबुद्धिप्रतिभासे संकेतः। आद्यं विकल्पमधिकृत्याह-व्यवहारसमर्थत्वे तस्य विकल्पबुद्धिप्रतिभासस्य,अर्थक्रियासमर्थत्वेन हेतुना, वस्तुत्वात् कारणात्, बाह्ये वस्तुनि अनिमित्तो द्वेषः,स्वसंविदन्यत्वेन तस्यैव बाह्यत्वादित्यर्थः । तदसमर्थत्वे तु व्यवहारासमर्थत्वे पुन., प्रक्रमाद् विकल्पबुद्धिप्रतिभासस्य । किमित्याह—संकेतवैयर्थ्यम् व्यवहारार्थमस्य करणादिति । दोषान्तरमाह—तद्वाच्यावाच्यस्वभावत्वचिन्तासिद्धेश्च न विकल्पबुद्धिप्रतिभासे संकेतः । आद्यं विकल्पमधिकृत्याह-तच्छब्दवाच्यस्वभावत्वे तस्य विकल्पबुद्धिप्रतिभासस्य, शब्दस्यापि तद्वाचकस्वभावत्वमिति कृत्वा । किमित्याह—संकेतभावः । कथमित्याह—अतिप्रङ्गात् न हि घटः पटवाचकस्वभावः सन् पटेन संकेत्यते इति अतिप्रसङ्ग इति ॥

स्यादेतच्छब्दो हि विकल्पजन्मा विकल्पहेतुश्च वर्त्तते। यथा चोक्तम्-"विकल्पयोनयः शब्दाः विकल्पाः शब्दयोनयः" इति। ततश्चासौ शब्दो यथाभूतादेव वक्तृविकल्पादुत्पद्यते तथाभूतस्यैव श्रोतृविकल्पस्य जनक इत्येतावतांशेन तत्र सङ्केत इति प्रतिपाद्यते, न पुनः शृङ्गग्राहिकया क्रियते। तथा च तैमिरिकद्वयद्विचन्द्रप्रतिपादनन्याय एवेहाऽवितथशब्दार्थव्यवहारज्ञैरनल्पधीधनैः प्रतिपादितः। यथोक्तम्-

"रूपान्तरं विकल्पे यदुभयोः प्रतिभासते।
सत्यर्थे तत्र सङ्केत एकत्वाध्यवसायतः॥ १॥
यादृशाद्यः समुत्पन्नः स भवत्येव कारणम्।
तादृग्विधविकल्पस्य ध्वनिः सङ्केतसंस्थितिः॥ २॥
किमेतदिति सङ्केत्य इतरोऽप्येवमित्यदः।
न कल्पयति यावद्धि तावन्न समयोद्भवः॥ ३॥
वक्तुः श्रोतुश्च तुल्याभे बुद्धी तेनैकगोचरे।
तत्त्वेन बहिरर्थोऽस्ति न कश्चिच्छब्दगोचरः॥ ४॥
स्वबुद्धिप्रतिभासस्य संवित्तावपि जायते।
बहिरर्थग्रहे मानस्तुल्यतैमिरबुद्धिवत्॥ ५॥" इति।

स्यादेतत्, अथैवं मन्यसे शब्दो हि विकल्पजन्मा विकल्पहेतुश्च वर्तते, विकल्पजनक इत्यर्थः। यथोक्तं भदन्तदिन्नेन-'विकल्पयोनयः शब्दाः विकल्पाः शब्दयोनयः' इत्यादि। ततश्चेत्यादि। ततश्चैवं सति, असौ शब्दः, यथाभूतादेव वक्तृविकल्पादघटाद्यपोहप्रतिभासिनः सकाशादुत्पद्यते, तथाभूतस्यैव श्रोतृविकल्पस्य जनको बीजाङ्कुरनीत्या, एतावतांशेन तत्र सकेत इति प्रतिपाद्यते, न पुनः शृङ्गग्राहिकया क्रियते संकेतः। तथा चेत्यादि। तथा च तैमिरिकद्वयद्विचन्द्रप्रतिपादनन्याय एवेहाधिकारेऽवितथशब्दार्थव्यवहारज्ञैः पूर्वा-

चार्यैरनल्पधीधनै प्रतिपादित । यथोक्तं वार्तिकानुसारिणा शुभगुप्तेन—रूपान्तरं स्वलक्षणादन्यद् विकल्पे, यत् सामान्यलक्षणाख्यम्, उभयोर्वक्तृश्रोत्रोः, प्रतिभासते स्फुरतीव, सत्यर्थे अपोहाश्रये, तत्र रूपान्तरे, संकेत एकत्वाध्यवसायत, अर्थेन रूपांशैकत्वाध्यवसायेनेत्यर्थः ॥ १ ॥ तथा, यादृशादित्यादि यादृशाद् विकल्पात्, यः समुत्पन्नो जातः, स भवत्येव कारणं निमित्तम्, श्रोतारमधिकृत्य तादृग्विधविकल्पस्य ध्वनिः शब्दसंकेतसंस्थितिरियमेव ॥ २ ॥ किमेतद् बौद्धरूपमधिकृत्य आह, इत्येवम्, संकेत्यः पुमान्, इतरोऽपि संकेतकः, एवमिति, अदः एवमेतत् । न कल्पयति यावद् यस्मात्, तावन्न समयोद्भवो न संकेतजन्म ॥ ३ ॥ यत एवं वक्तुः श्रोतुश्च द्वयोरपि तुल्याभे समानाकारे बुद्धी, तेन कारणेन, एकगोचरे अपोह्यार्थापेक्षया । तत्त्वेन परमार्थेन, बहिरर्थोऽस्ति न कश्चित् शब्दगोचरः ॥ ४ ॥ कथं बाह्येऽभिमान इत्याह—स्वबुद्धिप्रतिभासस्य स्वबुद्ध्याकारस्यापि, संवित्तौ जायते । बहिरर्थग्रहे मानस्तुल्यतैमिरिकबुद्धिवत्—तैमिरिको हि तैमिरिकस्य चन्द्रद्वयं प्रतिपादयति, स स्वबुद्धिप्रतिभासमितरोऽपि स्वबुद्धिप्रतिभासमेव प्रतिपद्यते, बाह्यचन्द्रद्वयस्याभावादिति भावना ॥ ५ ॥

**एतदपि यत्किञ्चित्, अविचारितरमणीयत्वात्, शब्दस्य विकल्पमात्रतो जन्मासिद्धेः, तद्भावेऽपि मूकादिषु तददर्शनात्, समग्रकारणस्य च कार्याव्यभिचारात्, अन्यथा समग्रत्वानुपपत्तेः, निमित्तमात्रत्वे चास्य तद्वन्निमित्तान्तरावगमनिमित्तत्वे न विरोध इत्यस्तु विषयेऽपि सङ्केतः, विषयविकल्पविवक्षाप्रयत्नभाषाद्रव्यादिविशेषेभ्यस्तज्जन्मोपपत्तेः, घटोऽयमानयैव चैनमित्यादौ तथा दर्शनात्, इत्थम्भूतस्यान्यतरवैकल्येऽप्यभावात्, भाविनश्चेत्थम्भूतत्वानुपपत्तेः, तेन व्यभिचारायोगात्, तादृशस्य विकल्पमात्राभिधायित्वेऽप्यदोषात्, प्रमाणा-**

**भासवत्तदाकारत्वेऽपि विशिष्टकार्यासाधनत्वात् । इति युक्ति-युक्तं सच्छब्दादाविद्वदङ्गनादि प्रतीतं विषयप्रवृत्यादि ॥**

इत्येवम् ,पूर्वपक्षमधिकृत्याह—**एतदपि यत्किञ्चिद् असारम्**। कुत इत्याह—**अविचारितरमणीयत्वात्** । एतदेवाह—**शब्दस्य विकल्पमात्रतः** सकाशात् **जन्मासिद्धेः**, असिद्धिश्च—**तद्भावेऽपि** विकल्पमात्रभावेऽपि, मूकादिषु वक्तृषु, आदिशब्दादवक्तृविकल्पवद्ग्रहः, **तददर्शनात्** शब्दाश्रुतेः, नावश्यं कारणानि कार्यवन्ति भवन्ति इत्याशङ्क्याह—**समग्रकारणस्य च कार्याव्यभिचारात्** । इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा** एवमनभ्युपगमे समग्रत्वानुपपत्तेः, निमित्तत्वमात्रत्वे च अस्य विकल्पस्य, तद्वदिति निदर्शन विकल्पवत्, निमित्तान्तरावगमनिमित्तत्वे न विरोध इति कृत्वा । किमित्याह—**अस्तु विषयेऽपि संकेतः** । कस्मादित्याह—**विषयविकल्पविवक्षाप्रयत्नभावाद्व्यादिविशेषेभ्यः** सकाशात्, **तज्जन्मोपपत्तेः** शब्दोत्पत्त्युपपत्तेः । उपपत्तिश्चेयमित्याह—**घटोऽयम्, आनय चैनमित्यादौ तथा दर्शनात्** विषये संकेतदर्शनात् प्रतीतिप्रवृत्त्यादेरितिगर्भः । विषयमन्तरेणाऽपि डित्थादिशब्दानां जन्म दृश्यते । इत्यारेकापोहायाह—**इत्थंभूतस्य** विशिष्टस्य शब्दस्य, घटोऽयमित्यादेः, अन्यतरवैकल्येऽपि विषयाद्यभावेऽपि अभावात्, भाविनश्च अन्यतरवैकल्ये इत्थंभूतत्वानुपपत्तेः विषयादिविशेषजन्मत्वानुपपत्तेः, तेन अन्यतरवैकल्यभाविना शब्देन व्यभिचारायोगाद् । तादृशस्य अन्यतरवैकल्यभाविन. । किमित्याह—**विकल्पमात्राभिधायित्वेऽपि अदोषात्** । कथमदोष इत्याह—**प्रमाणाभासवत्** इति निदर्शनम् । तदाकारत्वेऽपि शब्दाकारत्वेऽपि, विशिष्टकार्यासाधनत्वात् विकल्पमात्राभिधायिनः शब्दान्तरस्य, प्रमाणाभासमपि च प्रमाणाकारमेव इति भावनीयम् । इति एवम् ,युक्तियुक्तं सच्छब्दाद् विषयादिविशेषजन्मनः, आविद्वदङ्गनादि प्रतीतं विषयप्रवृत्यादि,आदिशब्दात् प्राप्त्यादिग्रहः ॥

अर्हम्

श्रीविजयधर्मसूरिगुरुभ्यो नमः ।

## महोपाध्यायश्रीमेघविजयगणिविरचितम् ।

# देवानन्दाभ्युदयमहाकाव्यम् ।

श्रियः प्रियः पार्श्वजिनेश्वरः श्रियं
तनोतु पूर्णेन्दवमण्डलाननः ।
ननाम वामां समवेक्ष्य यं श्रितं
हिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥

जयत्ययं श्रीविजयादिदेववाक्
प्रभुर्दधत्तीव्रमहातपोमहः ।
श्रिया परब्रह्मसमं स्मरेन्धने
प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ॥ २ ॥

जयत्ययं श्रीविजयादिदेववाक्
प्रभुर्दधत्तीव्रमहातपोमहः ।
किमैन्द्रवज्रं रविमण्डलं त्विषा
किमेतदित्याकुलमीक्षितं जनैः ॥ ३ ॥

सरस्वतीं पीनपयोधरां स्तुमः
क्रमद्वयाम्भोजलसत्सितच्छदाम् ।
यदाश्रये स्याद् नृपतेः कविर्वचः
क्रमादमुन्नारद इत्यबोधिसः ॥ ४ ॥

---

१ हिरण्यवद् गर्भावयवभूर्यस्यास्ता वामाम् । २ अमुदो विषादस्य नीरो नाशस्त दत्ते इति अनुन्नारद । ३ इत्या प्राप्या बोधिरेव सा लक्ष्मीर्यस्य सः ।

सदक्षजातिप्रणयं कलाधरं
धरन्तमुच्चैर्भुवनोपकारकम् ।
यशोऽर्जुनं सज्जनमाश्रये श्रिये
स्फुटोपमं भूतिसितेन शंभुना ॥ ५ ॥

असज्जनं प्राप्य गुणाधिकाऽपि गौ-
र्भवेदसोमालतयाऽतिदुर्गमा ।
सुसीमतां नैति रसेऽपि किम्भ्रतं
[2]धरा धरेन्द्रं व्रततीततीरिव ॥ ६ ॥

प्रभोः प्रणेतुं गुणगौरवं स्तवं
गुरुं कविं वा न वितर्कये क्षमम् ।
सदा सुरासक्तमतिं स्वकान्तिभि-
र्विडम्बयन्तं शितिवाससस्तनुम् ॥ ७ ॥

तथापि गौरं चरितैर्गुरुं स्तुवन्
[1]समौक्तिकश्रीफललिप्सुरस्म्यहम् ।
तपोमहोभिः सहितं समुन्नतं
घनं घनान्ते तडितां गणैरिव ॥ ८ ॥

[3]कृपाश्रयात् स्वीयगुरोः प्रसादतः
स्वसाध्यसिद्धिं श्रयितास्मि निश्रमम् ।
[4]समीरणाद् रेणुरुपैति सज्जितं
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ९ ॥

---

१ समग्रं यद् औक्तिकं वाचिकं तदेव श्रीयुत फलं तल्लिप्सु', यद्वा 'सः' इति अहं जाड्यपात्रं कर्ता, मौक्तिकं मुक्तिसंबन्धि, श्रीयुतं फलं तल्लिप्सुरिति । २ शरदि । ३ अनेन निजगुरोः 'कृपाविजय' इति नामसूचा । ४ समीरणो वायु ।

अथात्र जम्बूपपदेऽस्ति भारतं
प्रभारतं द्वीपकुलप्रदीपके।
महोदयं ध्यायदिवास्य गङ्गया
विभातमच्छस्फटिकाक्षमालया॥ १० ॥

स गूर्जरत्रा इति नीवृतां वर-
श्चकास्ति तस्मिंस्त्रिदिवं सचित्रयन्।
सदोडुनेत्रैरदसीयभासना-
मवेक्षमाणं महतीं मुहुर्मुहुः॥ ११ ॥

अनन्तपट्टे खटिकाक्षरैर्ग्रह-
च्छलादमुष्येव विलिख्य संस्थितिम्।
संस्कर्तुमभ्यस्यति विश्वकृत् सदा
पदं महेन्द्रालयचारुचक्रिणः॥ १२ ॥

सरस्यतिस्मेरपयोजकाननाद्
निशास्थितोऽलिप्रकरः समुत्पतत्।
इहाबभौ किं रविनारदागते-
र्जवेन पीठादुदतिष्ठदच्युतः॥ १३ ॥

यदीश्वरस्याधिनिसूदनात्मसु
श्रुतेषु गीतेषु बुधैरधःकृतौ।
सुरैः समं वा दनुजैर्विसर्जितौ
सुतेन धातुश्चरणौ भुवस्तले॥ १४ ॥

समुद्रधारान् मणिढौकनाकृतेऽ-
भ्युपतमेषोऽर्चयति द्रुमैः सुमैः।

१ गगनपट्टे। २ खटिका भाषाया 'खडी' इति प्रसिद्धा।
३ नारदेन।

गृहानुपैतुं प्रणयादभीप्सवो
भवन्ति नाऽपुण्यकृतां मनीषिणः ॥ १५ ॥
वदन्ति केदारगणाः स्वरेखणै—
रितीव सद्रेखित विश्ववास्तवम् ।
दिवः समादाय मदादमुं पुमां—
श्चिरंतनस्तावदभिन्यवीविशत् ॥ १६ ॥
विशांमसौ श्रीलनयाऽभिनन्दनः
समुन्नतज्योतिरपास्ततापनः ।
महौषधि प्रत्तरुचिः समुद्गते—
रचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १७ ॥
स्त्रीराज्यभूमौ युवतीजना इवो—
द्गृहीतपत्रासय इक्षुयष्टयः ।
प्रीणन्ति सौवाङ्गनिपीडनै रसै—
र्महानुभावा हि नितान्तमर्थिनः ॥ १८ ॥
इहास्ति शङ्खेश्वरतीर्थमद्भुतं
सनायकं पार्श्वजिनाभिभूभुजा ।
भुजंगमानां यमुपप्लवे भजन्
नतेन मूर्ध्ना हरिरग्रहीर्दर्पः ॥ १९ ॥
श्रियं स शङ्खेश्वरपार्श्वतीर्थकृद्
दधेऽर्थितार्थप्रथनाद् मरुत्तरोः ।
अचूचुरच्चैत्यमचर्च्यचारुतां
सुमेरुशृङ्गस्य तदा तदासनम् ॥ २० ॥

---

१ गूर्जरदेशम् । २ पुरुषाणाम् । ३ श्रीतनयः स्मरः पक्षे श्रीर्लक्ष्मीः लनयाःपुत्राः,तैरभिनन्दनो वर्धनः । ४ सौव स्वीयम् । ५ श्रीपार्श्वासन चैत्यम् ।

जिनप्रभुः संकटकोटिकिंट्कृत्
पुरःस्थदीपैः प्रतिबिम्बितैस्तनौ ।
विदिद्युते वाडवजातवेदसः
शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥ २१ ॥
करम्बिताः पादनखांशुराशिभि-
र्बभुः प्रभोर्गौरवपुःप्रभाभराः ।
प्रदीपदीप्रद्युतिपुञ्जसंयुज-
स्तुषारमूर्तेरिव नक्तमंशवः ॥ २२ ॥
प्रसादयन् मर्त्यगणः सविस्मय-
स्तथाऽपरोऽमर्त्यगणो निमेषदृक् ।
प्रभोः पुरोऽन्योऽन्यनिषक्तरोचिषौ
तदैकवर्णाविव तौ बभूवतुः ॥ २३ ॥
अयं हि कैवल्यधरः स्वसेविनां
ददाति कैवल्यपदं न तद् महत् ।
तदद्भुतं यद् ददते नृणां स्रजं-
स्तपोधनाभ्यागमसंभवा मुदः ॥ २४ ॥
दशावतारः कमलोपमाननः
फणीश्वरोत्सङ्गविनिर्मितासनः ।
जिनः प्रभावान्नरकान्तकारकः
स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥ २५ ॥
जगत्पवित्रे विषयेऽत्र सन्त्यतः
पराणि तीर्थान्यथ किं पुनर्विधिः ।
अमुं चकारेति धियेव मा हरः

१ चन्द्रस्य । २ देशे । ३ अमुं गूर्जरदेश विधिरिति धिया चकार यद् अच्युतः, हरो वा मा मा हसीत् इति ।

शुचिस्मितां वाचमवोचदच्युतः ॥ २६ ॥
मदाद्नग्नाननमार्जुनेऽर्जुनी[2]
पयः किरन्ती चरति प्रतिस्थलम् ।
पिबन् यथार्थाभिध एष तन्महे-
र्व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ २७ ॥
अथास्त्यमुष्मिन् नगरं गुरोर्गिरे-
रिलादिदुर्गाख्यमुपत्यकाश्रितम् ।
त्रिविष्टपस्यापि च यन्मणीगृहै-
रदस्त्वया[3] नुन्नमनुत्तमं तपः ॥ २८ ॥
कृतः प्रजाक्षेमकृता प्रजासृजा
सुपात्रनिक्षेपनिराकुलात्मना ।
पुरप्रदेशः स ऋचामिव ध्वनि-
र्निधिः श्रुतीनां धनसंपदामिव ॥ २९ ॥
हरिप्रियां या नगरी गरीयसीं
सदा समभ्याप्य तयेव शिश्रिये ।
कथंचिदैकात्म्यवशात् तया पुनः
गिरोऽथवा श्रेयसि केन तृप्यते ॥ ३० ॥
पुरंदरस्यापि पुरं प्रगूयते
पुराणविद्भिर्निजवृत्तिसिद्धये ।
न चास्त्यमुष्या नगरीति मेऽकरोद्
गुरोस्तवैवागमं एष धृष्टताम् ॥ ३१ ॥

---

१ आर्जुनं तृणसमूहः । २ अर्जुनी गौः ३ आ लक्ष्मीस्तया । ४ शिश्रिये इति योज्यम् । ५ तदधिकवर्णनयोग्या नगरी नास्ति इत्येवंरूप आगमः ।

सुवर्णसालोज्ज्वलयोगपट्टभृत्
कृताभिषेकं निशि चान्द्रवारिभिः ।
स्वबिम्बिताक्षिगुणं दधत् पुरं
किमस्ति कार्यं गुरु योगिनामपि ॥ ३२ ॥

उदीर्णरागप्रतिरोधकं जनै-
र्विहारवृन्दं विहितं सुदर्शनैः ।
उपेयुषो मोक्षपथं मनस्विनः
स्वमुच्चकैर्दर्शयतीव केतुभिः ॥ ३३ ॥

नभोगभावात् त्रिदिवं मुनीश्वरै-
र्गृहीतमध्यात्मदृशा कथंचन ।
अतोऽधिकं यत्र जभन्तमुज्जगुः
पुरातनं त्वां पुरुषं पुराविदः ॥ ३४ ॥

यदाश्रयश्रेणिशिखासु खाश्रयात्
सदा वसन्ति द्युसदामिहाश्रयाः ।
दधात्यतोऽधः कथमप्यतिश्रमै-
रहीश्वरस्तम्भशिरस्सु भूतलम् ॥ ३५ ॥

शिवैकसौहार्दधरैर्धनाधिपै-
र्भृताऽपि या पुण्यजनैरलंकृता ।
प्रभाविशेषादरणैर्वृषाश्रयै-
र्भवान् भवोच्छेदकरैः करोत्यधः ॥ ३६ ॥

---

१ नभोगा देवास्तद्भावात् । २ आं लक्ष्मीम् । ३ गगनाश्रयात् । ४ शिवं मोक्षः, शिवो वा । ५ पुण्यजना धार्मिका यक्षा वा । ६ प्रभा कान्तिः, अलका वा, यद्वा प्रभाविशेषाः प्रभाविनागाः । ७ वृषो धर्मः, वृषभो वा । ८ एकादश रुद्रान् ।

वसद्भिरस्यां मनुजैर्विसर्जितः
स्रगादिनिर्माल्यभरोऽपि यत्र सा ।
सुगन्धदानात् पवनैर्विदेशगै-
र्गुरुर्धरित्री क्रियतेतरां त्वया ॥ ३७ ॥
पुरं पुरन्ध्रीचललोचनाञ्चलैः
स्मरं यदुज्जीवयते हरार्दितम् ।
फणाभृतां पूस्त्वमिहेदृशं, मुदः
पदं दृशः स्याः कथमीशमादृशाम् ॥ ३८ ॥
यदम्बुजाक्षीर्निशि चन्द्रशालिका
विलासिनीर्भोक्तुमिव स्मरातुराः ।
सुराः श्रयन्तेऽन्वहमृक्षलक्षतः
क्षपातमस्काण्डमलीमसं नभः ॥ ३९ ॥
सरोभिरुन्निद्रपयोरुहाननै-
र्व्यधायि या मोदधरैर्धरश्रियः ।
तया द्रुमाणां कुसुमैरुपास्यया
द्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥ ४० ॥
चतुष्पथे पण्यमगण्यमुच्चितं
श्रितैः प्रभाकृत्कृतसत्यकर्मभिः
उपैत्य देवैः क्रियते क्रयिव्रजै-
र्मिथस्तदाभाषणलोलुपं मनः ॥ ४१ ॥
पुरीं पुरन्ध्रीजनरूपसंपदा
सदा जयन्तीं जयवाहिनीजनम् ।
स्थितस्य दूरे दिशति स्वनिन्दना-

१ अया सुगन्धलक्ष्म्या । २ ईशस्य हरस्य, माया लक्ष्म्या दृग् दर्शन येषां तेषां फणाभृताम् ।

महिद्विषस्तद्भवता निशम्य ताम् ॥ ४२ ॥
अथ स्फुरद्विक्रमभूमभूरभूत्
सुराष्ट्रकुटान्वयभूर्भुवः प्रभुः ।
रवीन्दुदम्भाद् नभसे यदर्पितं
हिरण्यपूर्वं कसिपुं प्रचक्षते ॥ ४३ ॥
सभानुभानुर्भुवि भानुसंज्ञया
बभौ बृहद्भानुविभानुभावभृत् ।
प्रतापरूपं श्रयताऽऽयतार्थभी-
र्मनस्तु येन द्युसदां न्यधीयत ॥ ४४ ॥
तदङ्गजः पुञ्ज इति श्रियाऽऽख्यया
जयंश्च मुञ्जं नृपवर्ग आदिमः ।
यदाश्रयादाह हरिश्चलेत्यमुं
प्रवादमुच्चैरयशस्करं श्रियः ॥ ४५ ॥
रणेऽतिरीणैर्बहुदृष्टपिञ्जलैः
सदाऽसुरीभासनयाऽस्य संनिधौ ।
स्वजीवनार्थं जवसानि यावनै-
र्गणैस्तमाशङ्क्य तदादि चक्रिरे ॥ ४६ ॥
समञ्जसेनैष जनार्दनं जयन्
यथा प्रजारञ्जनमार्जयज्जयी ।
व्यधायि तस्यै शिरसा रसाद् मिलत्-
करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥ ४७ ॥

१ महिद्विष इन्द्रस्य । २ इन्द्रभवत्वम् । ३ 'प्रतापकीर्ती' इति वा पाठः । ४ " कसिपुर्भोजनाच्छादौ " इति हैमः । ५ पक्षे नृपु पर्वके पुञ्ज आद्य मुञ्जस्तु अन्त्य. । ६ रीणैर्भग्नै । ७ भृशमाकुलै. । ८ तृणानि । ९ दिक्शब्देन लक्षणया रीतिर्नीतिमार्गो वा।

चमूप्रचारैरचलाप्रकम्पिना
द्विषां गणो येन रणाङ्गणे क्षणात् ।
प्रकोपकम्पादरुणैरिवारुणै-
रुरोविदारं प्रतिचस्करे नखैः ॥ ४८ ॥

तदात्मजन्माङ्गजमञ्जिमा जने
द्विधाऽपि नारायणशब्दविश्रुतः ।
पुरं वलक्षं विदधद् यशोधनै-
र्बभूव रक्षःक्षतरक्षणं दिवः ॥ ४९ ॥

स शास्ति शास्ता जगतीं हरेः श्रियं
हरन् विहारैर्बलिराजबन्धनात् ।
भक्तेर्भरान् कारयते बलेन यः
प्रसादमिच्छासदृशं पिनाकिनः ॥ ५० ॥

जवाभिगृह्णन्नरिमण्डलं बला-
दुपाददे मण्डलमग्रणीः सताम् ।
ददौ पुनस्तस्य सुराङ्गनाजन-
स्वयंग्रहाश्लेषसुखेन निष्क्रयम् ॥ ५१ ॥

नभोनिविष्टानुडुरूपिणः सुरान्
भयात् प्रगेऽनाशयदोद्यनिःस्वनैः ।
प्रतापमाधाय रविच्छलाद् व्यधाद्
य इत्थमस्त्रास्थ्यमहर्निशं दिवः ॥ ५२ ॥

वदान्यभावादधरीकृतामर-
द्रुमस्य राज्ञः पटहध्वनेस्त्रसन् ।

---

१ रक्षोभि क्षतं भग्न रक्षण रक्षा यस्य तद् दिवः पुरमुज्जवलयन्, रक्षसा क्षतानि प्रहारास्तेभ्यो रक्षण यत्र तत्, रक्षोभिः क्षत भग्नं लक्षण दर्शन यस्य तदिति वा । २ प्राभातिकवाद्यशब्दे ।

स्वपादयोः कन्दरमन्दिरोदरे
बेलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ ५३ ॥
निविड्डुवानोऽस्य भियाऽभ्रकुम्भिनं
विधुच्छलादुच्छिरसं नभोऽम्बुधौ ।
दिवं विहायैकदिगंशमाश्रयन्
निनाय बिभ्यद् दिवसानि कौशिकः ॥ ५४ ॥
जगन्नयैः संन्नयनं नयन्नयं
दरिद्रताद्रावकदानमुद्रया ।
ररञ्ज लोकानपि हातुमाहितं
न चक्रमस्याक्रमताधिकं धरम् ॥ ५५ ॥
उवास तत्र व्यवहारिणां वरः
स्थिराभिधो माधवदेहसंभवः ।
वपुस्त्विषा श्रीहरणाद् मनोभुवः
प्रकम्पयामास न मानसं न सः ॥ ५६ ॥
गिरः श्रियः क्षान्तिवदान्यतादयो
गुणाश्च मुक्त्वा त्रिजगत् समं समे ।
तदीयमस्थानतयेव दुष्कले-
र्जवेन कण्ठं सभयाः प्रपेदिरे ॥ ५७ ॥
पदे पदेऽर्हन्निलयैः स्वकारितै-
र्यशःसगर्भैरथ संघयात्रया ।
तथा स गां चक्रिरहींशितुर्यथो-
दुवाह दुखेन भृशानतं शिरः ॥ ५८ ॥

---

१ शत्रुः पादयोर्बलस्य शीघ्रतां प्रशशंस । २ उन्मस्तकम् । ३ अस्य राज्ञः, अहितानामिदमाहित चक्रम्, अधिक महान्तम्, धर पर्वतम्, हातुं त्यक्तुम्, नाक्रमत नोद्यमं चकार । ४ कण्ठ समीपम् । ५ गा भुवम् ।

पतिव्रता प्राप्तवपुः स्वरूपतः
शचीव रूपा इति रूपरूपिणी ।
शुचिस्वभावैर्जगतीं तमोहरै-
रलंचकारास्य वधूरहस्करः ॥ ५९ ॥

स्वबन्धुकर्णोत्पलयुग्ममान्तिके
निवेश्य तस्या वदनानुजीविना ।
निबद्धवेणीतमसः प्रसादनै-
र्न नर्मसाचिव्यमकारि नेन्दुना ॥ ६० ॥

मुखश्रियाऽस्यास्तुलितं विधुं विधि-
र्बभञ्ज पूर्णं न पुनर्व्यचूर्णयत् ।
अयं ततः पुष्करदन्तिनो यथा
विषाणमद्यापि पुनः प्ररोहति ॥ ६१ ॥

विलासलीलाकलनाय तस्थिवा-
नजस्रमस्याः सविधेऽप्सरोजनः ।
सखीमिषात् तद्विरहोष्मणाऽऽतुराः
प्रकम्पनेनानुचकम्पिरे सुराः ॥ ६२ ॥

तयास्य पाणिक्रममङ्घ्रिमाक्रमै-
र्जितश्रि पद्मं महिकाश्रुनिर्भरम् ।
व्यनक्ति भृङ्गैस्सुखैर्ज्वलत्क्रुधा
तनूनपाद्धूमवितानमाधिजैः ॥ ६३ ॥

पयोधरश्रेणिभरश्रियाऽनया
निर्भर्त्सितं कुम्भयुगं रवेण नः ।
दिगन्तमाप्तैरिति सज्जलज्जया

१ प्रशस्तरूपशालिनी । २ तमः पापं तिमिरं वा । ३ कारा-
व्यवहारेणास्य व्यवहारिणो वधूरहस्करश्च शुचिस्वभावैर्जगतीमलंचकार ।

चिराय याथार्थ्यमलम्भि दिग्गजैः ॥ ६४ ॥

अजिह्मकृद् ब्रह्म तदङ्गसंगतं
पुनात्यतुच्छोच्छ्रितवाल्लमन्वयम् ।
किमद्भुतं यच्छ्रवणाद् ध्रुवेक्षणैः
कुलैर्न भेजे फणिनां भुजंगता ॥ ६५ ॥

प्रवेणिवादादधरीकृतः स्मयो
वचःप्रपञ्चैरमृतं तयोचितम् ।
भ्रुवो भरार्तैर्न तथाऽपि भोगिभिः
कुलैर्न भेजे फणिनां भुजंगता ॥ ६६ ॥

श्रुतिद्वयीदर्शनतः स्फुरद्रुचि
द्वयं दृशोर्नाटयतः स्मराश्रयम् ।
कलत्ररत्नस्य कलाः किलाऽखिलाः
पुरेऽस्य वास्तव्यकुटम्बितां ययुः ॥ ६७ ॥

उडूनि मुक्तास्रजि चित्रके गुरु–
र्विधुः खगः कुण्डलयोः कृतस्थिती ।
सुरा भजन्तः किमु कामिनीमणेः
पुरेऽस्य वास्तव्यकुटअम्बितां ययुः ॥ ६८ ॥

अथाश्रयत् कोऽपि सुरः स्फुरत्प्रभो
भवाय गर्भं शुभदोहदोद्भवः ।
तदाश्रयेऽस्याः शुचिपाण्डुरं भृशं
वपुर्जलार्द्रोपवनैर्न निर्ववौ ॥ ६९ ॥

असूत सा पोषवलक्षपक्षजे
त्रयोदशेऽह्न्यथ ङ्गजरत्नमद्भुतम् ।
नृपादयोऽप्युत्सवकर्म चक्रिरे

---

१ वक्रता । २ शरीरे । ३ पौषशुक्लत्रयोदश्यामित्यर्थः ।

सदाऽभिमानैकधना हि मानिनः ॥ ७० ॥
क्रमेण जन्मस्य महे निवर्तिते
स वासुदेवाह्वयमादधे शिशुः ।
विधृत्य चिच्छक्तिमसौ तमोऽवधे-
र्विलङ्घ्यलं कां निकषा हनिष्यति ॥ ७१ ॥
स लाल्यमानोऽश्चितपञ्चधात्रिणा
तथा क्रमेणावयवानपूपुषत् ।
अशिश्रियद् विश्वकलाश्रियो यथा
प्रतीयते संप्रति सोऽप्यंसः परैः ॥ ७२ ॥
तदेव देवाग्रिमजन्मजन्मसद्-
वपुर्विशेषश्च गिरां श्रियां च सः ।
रवेः प्रभेव प्रकृतिः सुनिश्चला
पुमांसमभ्येति भवान्तरेष्वपि ॥ ७३ ॥
बभूव भूवल्लभचेतसां प्रियः
स्मरस्वरूपोऽपि स धर्मधर्मधीः ।
सदर्थभाक् चन्द्ररुचिर्यशोभरै-
रसंशयं संप्रति तेजसा रविः ॥ ७४ ॥
कुमारमद्रेस्तनयेव सादरं
तमङ्कमारोप्य जनन्यथोत्सुका ।
निरीक्षमाणावयवान् स्म सद्वयो-

---

१ ज्ञानिनः, मन्धातोर्ज्ञानार्थत्वात् । २ जन्मशब्दोऽकरान्त उणादौ। ३ असौ वासुदेवश्चिच्छक्तिं विधृत्यावधेर्विलङ्घ्य निस्सीम तम. पाप राहुं वा हनिष्यति । कि० चिच्छक्तिम्, अर कामुग्रा दीप्ताम् । निकषा पार्श्वे बालत्वेऽपीत्यर्थः । ४ पञ्चानां धात्रीणा समाहारः पञ्चधात्रि तेन । ५ न सः अंसः । ६ सुरसत्कपूर्वभवबद्धम् । ७ स्कन्दम् । ८ धात्री ।

वितीर्णवीर्यातिशयान् हसत्यसौ ॥ ॥ ७५ ॥

प्रकाममालिङ्ग्य निचुम्ब्य मूर्ध्न्यवक्
विवाहकर्म क्रियते तवाङ्गभूः ।
प्रमोदनीयाः सुहृदोऽनया दिशा
व्यापादनीया हि सतामसाधवः ॥ ७६ ॥

तनय ! नय विनोदशर्म नस्त्वं वितनु सनर्म सदोरसोरसार्द्रैः ।
रुचिरुचिरचलेक्षणा कुचाग्रध्रुवपरिरम्भनिपीडनक्षमत्वम् ॥ ७७ ॥

स्वीयैस्तद्वचनाग्रहेऽपि सहसा वीवाहसत्याकृतेः
प्रारब्धेऽतिमहोत्सवे प्रभवति श्रेयस्करे कर्मणि ।
ऐन्द्रः केकिकलापभृद् बलरिपोश्छायां सृजन्नश्वसा
व्योम्नीव भ्रकुटिच्छले न वदने केतुश्चकारास्पदम् ॥ ७८ ॥

इति श्रीदेवानन्दे महाकाव्ये दिव्यप्रभापरनाम्नि माघसमस्यायां–ऐङ्काराङ्के महोपाध्यायश्रीमेघविजयगणिविरचिते कथानायकोत्पत्तिवर्णननामा प्रथमः सर्गः ।



---

१ ऐन्द्रः केतुर्ध्वजो व्योम्नि बलरिपोः शक्रस्य वदने छाया सृजन्नास्पदं चकार । किं०वदने, न भृकुटिच्छले भृकुट्याश्छल स्खलित यत्र तस्मिन्नीदृशे न ।

अर्हम्

# द्वितीयः सर्गः ।

उद्विवाहिषया मात्राऽभ्यर्थित. स भवात्तभीः ।
जैनीं दीक्षामुपादित्सुरासीत् कार्यद्वयाकुलः ॥ १ ॥
अखण्डमण्डनश्रीणां सपिण्डाचण्डरोचिषाम् ।
संपृक्तानां विवाहार्थमथासावासदत् सदः ॥ २ ॥
स पितृव्योऽग्रजन्मा च बभौ भूविघ्नभेदिनी ।
रहःस्थले ज्वलत्येवमसौ नरशिखित्रयी ॥ ३ ॥
भ्रातस्तात सनोभावा दीक्षां गोचरयन्ति मे ।
सुखंमन्या वने जन्यपौरुषेयवृता इव ॥ ४ ॥
श्रुत्वाऽस्यैवं वचः स्थैर्यात् ताभ्यामूहे सविस्मयम् ।
सद्यः संपृक्तमात्रा च त्रिकूटशिखरोपमा ॥ ५ ॥
मातुर्भ्रातुश्च दृग्भावैर्विभाव्यान्तरभावनाम् ।
तं पितृव्यः कृताक्षेपमाचचक्षे विचक्षणः ॥ ६ ॥
वीक्ष्या दीक्षा तटस्थित्या वत्स ! नान्तर्निमज्जनैः ।
ऋषिकुल्येव सिद्धानां शुद्धवर्णा सरस्वती ॥ ७ ॥
अविमृष्टमशक्यार्थं नाद्रियन्ते मनस्विनः ।
वनौकसः प्रशस्यं किं नाटकीयस्य वस्तुनः ॥ ८ ॥
भुक्त्वा ततश्चिरं भोगं स्मेरदृग्भिः स्मराकरम् ।
क्रियाः क्रिया जरन्नुच्चैरिज्यायै तपसः सुत ! ॥ ९ ॥
श्रुत्वेत्यूचे स तद्वाचं मदनद्रुमसारणीम् ।
तात ! किं नैव दुःखाय वर्त्स्यन्तावामयः स च ॥ १० ॥

---

१ कलः । २-दीक्षापि ऋषिकुल्योग्या श्वेताम्बरत्का, गङ्गापक्षे निर्मला सिद्धाना सरस्वतीव सरस्वती वाणी ।

आयुर्वायुरिवाऽस्थेयश्चिकुराः संपदङ्कुराः ।
शस्त्रीव स्त्रीभवः काममतो दुःखाकरोति माम् ॥ ११ ॥
भवन्तोऽप्यनुमन्यन्तां ग्रहीष्ये सौख्यदं व्रतम् ।
कः सामग्र्यामवाप्तायां संदिग्धे कार्यवस्तुनि ? ॥ १२ ॥
किं पुनर्वार्तिकैर्भाष्यैः सूत्रवत् सर्वतोमुखम् ।
तत्त्वमेव वदन्त्यार्याः प्रकृत्या मितभाषिणः ॥ १३ ॥
ततोऽश्रुसेकाज्जाड्यार्त्तेर्न च किंश्चिद् विवक्षया ।
अकम्पि मातुरोष्ठेन बिम्बचुम्बनचञ्चुना ॥ १४ ॥
वत्स ! व्रतवचः शून्यवाग्युपन्यासवन्मम ।
प्रतिभाति नयैतां तद्गिरमुत्तरपक्षताम् ॥ १५ ॥
भर्तुर्वियोगे भामिन्या दिक् सूनुर्मातुरातुरे ।
करोति यः स्नुषालोकपरिपूतपुटे दृशौ ॥ १६ ॥
आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम ।
कुरु त्वं भूरिसौरभ्यां वनमालां मुखानिलैः ॥ १७ ॥
आक्रीडे[1] क्रीड्या स्त्रीभिरङ्ग[2]भूरङ्गभूतरोः[3] ।
प्रसवानीव धेह्यङ्गसङ्गिनीः स्वेदविप्रुषः ॥ १[८] ॥
त्वद्विवाहोऽस्तु दायाद[4]जन्म तद्दारकर्मभिः ।
सानुबन्धां स्रजं द्वारे विदधच्चूतपल्लवी[र्वा] ॥ १९ ॥
आमुष्मिककृते सूनो ! नैहिकीं त्यज संपदम् ।
नरो हि नरकः शीलं कृतानुव्याधमुद्वमन्[5] ॥ २० ॥
प्रदोषोऽङ्कस्थसूर्यत्यक् कुक्षिस्थेन्दुनिबद्धधीः ।
ग्रहैर्जाहस्यते नूनमुदंशुदशनांशुभिः ॥ २१ ॥

---

१ आक्रीड उद्यानम् । २ हे वत्स ! । ३ स्मरद्रुमस्य ।
४ दायादौ पुत्रबान्धवौ । ५ कृतोऽनुव्याध सपर्को यस्य तद्
विहितस्वीकारामित्यर्थः ।

इति प्रसूवचोवातैर्मन्दरागः स नाचलत् ।
चक्रेऽवक्रं तपः कृत्याक्रियाकेवलमुत्तरम् ॥ २२ ॥
आमुष्मिकसुखस्यांशोऽप्यैहिक्या नातिशय्यते ।
संपदा पूर्णयेद्धोऽग्निस्त्विषा नात्येति पूषणम् ॥२३॥
धर्मः पद्मः इवोद्बुद्धः शुद्धहंसाभिनन्दनः ।
सेव्यो भव्यैर्जनन्यैवं प्रवाचः कृतिनां गिरः ॥ २४ ॥
धर्माद् रसादिव स्वल्पादपि कल्याणसाधनम् ।
इति सूत्रस्य सद्वाण्यो भाष्यभूता भवन्तु मे ॥ २५ ॥
श्रेयसः श्रेयसः श्रेणी गिरेरिव सरिद् भवेत् ।
पापादापद्भवो ज्ञातुमिति दुर्मेधसोऽप्यलम् ॥ २६ ॥
अनुपार्जितपुण्यस्य जन्मान्तर्गडुजन्मिनः ।
निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ २७ ॥
मुक्त्यङ्गनानुरागाय विहाय व्रतपञ्चकम् ।
असमः शमिनामन्यो नास्ति मन्त्रो महीभृताम् ॥ २८ ॥
तत्राप्यार्य व्रतं तूर्य पावनं दुरुपावनम् ।
जगज्जैत्रस्मरादिभ्यः परेभ्यो भेदशङ्कया ॥ २९ ॥
ब्रह्मोष्णरश्मेर्बालार्चिश्चक्रवर्तिप्रवृत्तयः ।
तत् पूर्णतेजः स्तोतुं कैर्वाचस्पत्यं प्रतन्यते ? ॥ ३० ॥
निस्तोपं योषिदाश्लेषाद् मन्थनां द्रविणक्षयम् ।
प्राप्नोति पुरुषो नुनं दृष्टान्तोऽत्र महार्णवः ॥ ३१ ॥
मूलं धर्मतरोर्ब्रह्म कूलं भवपयोनिधेः ।

---

१ प्रसूर्माता । २ मन्दो रागो यस्यासौ, पक्षे मन्दरो योऽगः पर्वतो मेरुः । ३ इद्धो दीप्तः । ४ पारदात् । ५ पुण्यात् । ६ मङ्गलस्य । ७ दुखेन समीपे रक्षणीयम् । ८ योषितां नदीनामाश्लेषाद् नित्यसङ्गात् ।

येन लुब्धेन नालम्बि न वर्धयति तस्य ता॥ ३२ ॥
श्यामासक्तरुचिः कामोल्लासाद् राजाऽपि च क्षयी ।
सुवृत्तशीलो निर्दोषस्तत्रोदाहरणं रविः ॥ ३३ ॥
बालस्याऽबालगीःसारैरेवं बुद्धा प्रसूरपि ।
पार्थक्येन मृदि न्यस्तमुदकं नावतिष्ठते ॥ ३४ ॥
उच्चैः कुलगिरौ स्वस्था सिंहीव स्यामहं न किम् ।
यज्जन्यस्त्वं प्रशस्यश्रीः सैंहिकेयोऽसुराद्विषाम् ? ॥ ३५ ॥
चक्रे प्राचीव मित्रेर्ण त्वयाऽहं पुत्र ! निस्तमा ।
पुत्रौ क्रोडस्निहौ स्यातां सहजप्राकृतावपि ॥ ३६ ॥
प्रतीक्ष्यः पृथुकोऽपि स्यात् पुण्यधीर्नान्यथा महान् ।
पुण्य–नैपुण्यमर्च्यत्वे लक्ष्यं लक्षणमेतयोः ॥ ३७॥
धन्यस्त्वं योऽजयद् बाल्ये महामोहमहीश्वरम् ।
कृष्णति नः स तन्मूलं महद् वैरतरोः स्त्रियः ॥ ३८ ॥
[ धन्यस्त्वं वासुदवोऽसि महामोहमहीश्वरम् ।
जित्वाऽत्यजद् मूलमेता महद् वैरतरोः स्त्रिय ॥ ३९ ॥]
तत् प्रव्रज मया सार्धं त्वद्दते मां भं बाधते ।
प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव ॥ ४० ॥
एवं मातृगिरः शृण्वन् स्थिरसूः स्थिरमूहिवान् ।
धर्मे त्वराहितं स्थैर्यमलमश्रेयसे यतः ॥ ४१ ॥
अथ प्रतस्थे तीर्थानि नन्तुं निजजनैः समम् ।

---

१ ता लक्ष्मीः । २ श्यामा रात्रिः, नवयौवना स्त्री च । ३ चन्द्रः । ४ वृत्तमाचारः शील स्वभावः, दोषा रात्रिः । ५ असुराद्विषां देवानां प्रशस्यश्रीः । ६ सूर्येण । ७ पूज्यः । ८ बालः । ९ नागवशीकरणाद् यथार्थवासुदेवनामेत्यर्थः । १० महामोहः

स्थिरस्य वार्ता संयोज्य स सुतश्रवसः सुतः ॥४२॥
तस्य तीर्थनमस्यार्थं प्रस्थितस्य वयः शुभाः ।
प्रदक्षिणाक्रियायै स्मा३ऽऽशेरते तेऽभिमारुतम् ॥४३॥
अहं पूर्विकयेतीव द्रुमाः पुष्पैरवाकिरन् ।
विलम्बमर्चितुं धीरोऽविरोध्यं तं सहेत कः? ॥४४॥
तत्पार्श्वस्था द्रुमा वल्लीकान्तां श्लिष्टा रविप्रभाम् ।
आवव्रुश्छदनैः प्राप्तवैयात्यं सुरतेष्विव ॥ ४५ ॥
स्वयं नेत्रश्रिया न्यङ्कून् जितान् नाग्न्यातपादिभिः ।
तस्याऽपश्यद् वने दृश्यान् जननी क्लेशकारिणः ॥४६॥
शीतवातास्तमानर्चुर्न्यस्यन्तो वर्णपङ्कवत् ।
भालेऽम्बुजानां सामोदं देहिनस्तद्वरं रजः ॥ ४७ ॥
नामं नामं स तीर्थानि स्वयं तीर्थोपमा दधे ।
न कुर्वन्ति महात्मानः संज्ञायै जन्म केवलम् ॥ ४८ ॥
अथ श्रीमान् मुनीशोऽभूत् श्रीहीरविजयः प्रभुः ।
आसीद् यस्मिन् महः कीर्तिरुभयं तद् मनस्विनि ॥४९॥
पुष्पदन्ताविवायोज्य धात्राऽयं निर्ममे प्रभुः ।
गिरा सृजंस्तपस्तेजस्तन्म्रदिम्नः स्फुटं फलम् ॥ ५० ॥
श्रीतपागच्छसम्राजमिन्दिरैनं यद्वाश्रयत् ।

---

१ राज्ञः कर्णस्य वार्ता सयोज्य राजानमापृच्छ्येत्यर्थः । २ " सुतः पुत्रे नृपे " इत्यनेकार्थः । ३ आशय चक्रुः । ४ पूज्यम् । ५ वियातस्य धृष्टस्य भावो वैयात्यम् । ६ मृगविशेषान् । ८ तत् जगत्प्रसिद्धम् । ९ हीश्चन्द्र, रविः सूर्यः, तयोर्जयो यत्र स हीरविजयः । १० तपस्तेजस्तनोतीति तपस्तेजस्तत् । ११ म्रदिम्नो मार्दवस्य फलं गिरा वाण्या स्फुट कुर्वन् ।

ह्रियैवासीत् ततः कृष्णो लघुर्बहुतृणं नेरः ॥ ५१ ॥
निस्त्रिंशस्त्रिजगत्रासी यस्तेजःस्कन्दवैरिणाम् ।
प्रत्यूष इव नव्यश्रीस्तपनो जातवेदसाम् ॥ ५२ ॥
तस्याकब्बरभूजानेर्बोधिदानात् यदीयका ।
दिग्दन्तिदन्तावालम्ब्य कीर्तिर्द्यामधिरोहति ॥ ५३ ॥
प्रोद्दीपिते प्रतापेऽस्य कुपक्षाः क्षीणतां ययुः ।
शशाः किं यत्र विध्वंस्तमृगपूगो मृगाधिपः ? ॥ ५४ ॥
सौभाग्यभाग्याभ्युदयं प्रभोः स्तोतुं क्षमेत कः ।
पूर्णं सुवर्णशैलेन्द्रं कोऽम्भसा परिषिञ्चन्ति ? ॥ ५५ ॥
उद्वेल्लद्भाग्यसौभाग्यवल्लीं पल्लविनीं जने ।
कविर्न स्तोत्ररूपेण कोऽम्भसा परिषिञ्चति ? ॥ ५६ ॥
प्रभोः क्व कीर्तिपाथोधिः सुधाद्याः क्वैकदेशिनः ?, ।
सादृश्यं यान्ति न क्वापि सर्पिषस्तोयबिन्दवः ॥ ५७ ॥
श्रीमान् विजयसेनाख्यस्तत्पट्टे सूरिराड् बभौ ।
क्षणाद् येनान्तराक्षिप्ता दूष्यास्ते शत्रुभञ्जिताः ॥ ५८ ॥
स्वशक्त्युपचये केचिद् अस्य सूरेः सुदृष्टयः ।
परेऽप्युपेत्य पादाब्जसेवाहेवाकितां दधुः ॥ ५९ ॥
लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः ।
विधिरष्टश्रवा जज्ञे श्रोतुमस्य गुणानिव ॥ ६० ॥
कीर्त्याभोग श्रुताभोग सदाभोगः शुभाश्रियः ।
तादात्म्यभाक् प्रभौ तस्मिन् बुद्धेर्भोग इवात्मनि ॥ ६१ ॥
निर्दम्भाविद्यादम्भोलिभिन्नदुर्भावभूभृता ।
सूरीन्द्रेण शमैर्जिग्ये सुदमो दमघोषजः ॥ ६२ ॥

---

१ "नरः कृष्णेऽर्जुने च" इति कोषः । २ कीर्तिविस्तारः ।
३ श्रुतज्ञानम् । ४ दमघोषो नाम पूर्वऋषिस्तस्माज्जात इव लुप्तोपमा ।

उर्वीं सुपार्विणीं कुर्वन् श्रीराजनगरे गुरुः ।
अन्येद्युरायर्यौ भोगपूर्णस्तस्योत्सवाय सः ॥ ६३ ॥
सूरिं विवान्दिषोः पुंस्त्रीसंघस्याभिगमाद् वने ।
व्यभाद् विभातवद् योगस्तेजास्तिमिरयोः कुत. ॥ ६४ ॥
समौक्तिकस्रजां सूरिं नेमुषां भूस्पृशां श्रियः ।
ऊहुः सुमनसां भारैर्वामनीभूतभूरुहः ॥ ६५ ॥
प्रभुं प्रवेशयामास श्राद्धवर्गः समृद्धिभाक् ।
महोत्सवै सहोत्साहं पुरीं माहिष्मतीद्विषम् ॥ ६६ ॥
स्थिरात्मजोऽपि तत्रैत्य जगत्तीर्थं तमानमत् ।
न कः कल्पद्रुमं प्राप्य सर्वस्वार्थं समीहते ? ॥ ६७ ॥
प्रारेभे च प्रभुर्व्याख्यां स श्रेयः कुरुतां जनः ।
स्वर्गाऽपवर्गयोर्यो हि सर्वः स्वार्थं समीहते ॥ ६८ ॥
प्राप्य तां विद्युतः संपद्वरां चापल्यमादृताम् ।
मा प्रमादीर्जनः स्वादी मधुबिन्दोरिवाश्रवैः ॥ ६९ ॥
इत्याद्याः श्रीगुरोर्वाचश्चित्रदाश्चित्रदेवताः ।
सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव ॥ ७० ॥
निपीय गास्ताः सूरीन्दोर्धर्माम्भोधिविवर्धनीः ।
सवित्री स्वशिशोर्वक्तुं प्रस्तावमदिशद् दृशा ॥ ७१ ॥
प्राञ्जलिः स्थिरजन्माऽथ गुरुं विज्ञपयन्निति ।
उत्थाय तमसश्छेदे जगादाग्रे गदाग्रजम् ॥ ७२ ॥
मह्यं देयं बुधादेयं व्रतानां पञ्चकं महत् ।
गुरो ! त्वमिङ्गितज्ञोऽसि खलूक्त्वा खलु वाचिकम् ॥ ७३ ॥
यद्यपि स्वपुरे गत्वैवोचितं तत् तथाऽप्यहो ! ।

---

१ पृथिव्याः । २ पक्षे स्वस्य धनस्यार्थाः कार्याणि यस्मात् तम् । ३ इन्द्रियादिभिः ।

तव वाचोऽशीतकत्वमुपैति मम जल्पतः ॥ ७४ ॥
प्रारेभेऽथास्य दीक्षायै संभूय स्वजनैर्घनैः ।
स्मरध्वजैस्ताड्यमानैर्गेयस्येव विचित्रता ॥ ७५ ॥
ताच्चित्रकृत् पुरन्ध्रीभिः पुरं गृह्याभिरन्वितम् ।
तथा परिष्कृतं येन प्रबन्धो दुरादाहरः ॥ ७६ ॥
म्रदीयसीमपि घनामनन्यगुणभूषिताम् ।
नार्यः प्रसारयन्ति स्म चित्रां वाचं पटीमिव ॥ ७७ ॥
उच्चैर्दुकूलकेतूनां पङ्क्तिस्तत्पुरसद्मनाम् ।
जज्ञे जयाशिषां तत्र वक्तुर्गुणनिकेव सा ॥ ७८ ॥
सर्वत्र तद्बहिर्द्वारे स्मेरपुष्पस्रजां व्रजैः ।
गौर्जेहासोल्लसद्भासं जिगीषोरात्मसंपदः ॥ ७९ ॥
दीक्षामण्डपमासाद्य सिक्ताः पुष्पस्रजां रसैः ।
संकीर्णत्वेऽपि मनुजा जानते जातु न श्रमम्[1] ॥ ८० ॥
[2]चक्रे चन्द्रोदयैरन्तर्नभोमौक्तिकतारकम् ।
तथाऽर्केण यथा द्वारे स्थीयते बहिरश्मवत् ॥ ८१ ॥
हल्लीसकैः पणस्त्रीणां विस्मिताः पुत्रिकामिषाः
आरभन्तेऽल्पमेवाङ्गाः नृत्यं स्वर्गाङ्गनाजनाः ॥ ८२ ॥
कृतजेमनवारा नो कामं व्यग्रा भवन्ति च ।
महारम्भाः कृताधियः स्वीयाः कल्पद्रुमा इव ॥ ८३ ॥
अधः प्रियालसालस्य हाजानामनि पाटके ।
यावत् संघवरा हृष्टास्तिष्ठन्ति च निराकुलाः ॥ ८४ ॥
नावधीद् धीवरः कोऽपि देशावधि तिमिं तदा ।
दानैस्तुष्टो नचाभ्यर्णे शयालुर्मृगयुर्मृगम् ॥ ८५ ॥
त्रान्तरेऽथ तत्रागात् सूरीन्दुर्यस्य सूरिषु ।

---

१ अनालस्यम् । २ चन्द्रोदयैर्वितानै. ।

उदयश्री रवेः शश्वदादित्योष्विव कल्प्यते ॥ ८६ ॥
त्यजतोऽलंकृतिः सर्वाः स्थिरसूनोर्गुरोर्दशा ।
नेशुरेनांसि कामायोः फणिद्रा इव शत्रव ॥ ८७ ॥
प्राचीख्योरिवानूषः प्रसूसूर्न्वोर्विभासतोः ।
दीक्षावेषात् ततः स्मोच्चैः फलत्युत्साहपादपः ॥ ८८ ॥
बुद्धिशस्त्रप्रकृत्यङ्गो घनसंवृतिकञ्चुक ।
चारेक्षणः स चारित्राद् रेजे राजेव-नीरजाः ॥ ८९ ॥
तपःशुक्लदशम्यां तं प्राव्राजयत सोत्सवम् ।
सूरीन्द्रः प्रभया जेता रसभागाविदः कवेः ॥ ९० ॥
विद्याविजय इत्याख्यां सूरिश्चक्रे यथार्थदृक् ।
स्थाने न मोहः क्वापि स्याद् रसभागाविदः कवेः ॥ ९१ ॥
अशिक्षत स भिक्षूणामयनं विनयाश्रयम् ।
अप्रश्रितो विपन्मूलं प्राप्ते काले गदो यथा ॥ ९२ ॥
शुश्रूषया गुरोरेष कृत्स्नशास्त्ररसं पपौ ।
दशाकर्ष इव स्नेहं दशयाऽभ्यन्तरस्थया ॥ ९३ ॥
नैष्ठिको दैष्टिकोत्कृष्टः स विद्याविजयो मुनिः ।
अविरुद्धं क्रियाज्ञानद्वयं विद्वानपैक्षत ॥ ९४ ॥
भूयोऽन्तिषन्मणीभर्तुरनेनैव कलाभृता ।
उल्लासोऽब्धेरिवर्षीणां तथा नेतुर्महीभृतः ॥ ९५ ॥
जुष्टेश्वरेक्षणार्चिष्म गङ्गातीरे तपस्यतः ।

---

१ चारे ईर्यया गतौ ईक्षणे यस्य, राजपक्षे चारा गूढपुरुषाः । २ रसाः शृङ्गारादयस्तेषा साकर्येऽपि भागान् वेत्ति तस्य, पक्षे कवेः शुक्रस्य, कथं० रसो जल तस्य भागान् लभते, जलचारित्वात् शुक्रस्य । ३ अप्रश्रितोऽविनीतः । ४ सेवितहरनेत्रदहनं यथा स्यात्तथा ।

दत्तेण पुच्छिओ जो जन्नफलं कालओ तुरमणीए ।
समयाइ आहिएण सम्म वुइअ भयतेण ॥ २०५ ॥
जो तिहि पएहि सम्म समभिगओ सजम समारूढो ।
उवसम-विवेग-सवर चिलाइपुत्त नमसामि ॥ २०६ ॥
अहिसरिआ पाएहि सोणिअगन्धेण जस्स कीडीओ ।
खायन्ति उत्तमग त दुक्करकारय वन्दे ॥ २०७ ॥
धीरो चिलाइपुत्तो मुइअगलिआहि चालणिव्व कओ ।
सो तह खविज्जमाणो पडिवन्नो उत्तममट्ठ ॥ २०८ ॥
अड्ढाइज्जेहि राइदिएहि पत्त चिलाइपुत्तेण ।
देविन्दामरभवण अच्छरगणसकुल रम्म ॥ २०९ ॥
सयसाहस्सा गथा सहस्सपचय दिवड्ढमेग च
ठविआ एगसिलोगे सखेवो एस नायव्वो ॥ २१० ॥
जिन्ने भोअणमत्तेअ, कविलो पाणिण दया
बिहस्सइरविस्सासो पचालो थीसु मद्दव ॥ २११ ॥

---

दत्तेन पृष्टो यो यज्ञफल कालकस्तुरमण्याम् ।
समतयाऽऽहितेन सम्यगुदित भदन्तेन ॥ २०५ ॥
यस्त्रिभि पदै सम्यक् समभिगत सयमं समारूट ।
उपशम-विवेक-संवर चिलातिपुत्र नमस्यामि ॥ २०६ ॥
अभिसृता पादै शोणितगन्धेन यस्य कीटिका ।
खादन्त्युत्तमाङ्ग तं दुष्करकारक वन्दे ॥ २०७ ॥
धीरश्चिलातिपुत्रो मृद्वङ्गीभिश्चालनीव कृत ।
स तथा क्षप्यमाण प्रतिपन्न उत्तममर्थम् ॥ २०८ ॥
अर्धतृतीयै रात्रिदिनै प्राप्त चिलातिपुत्रेण ।
देवेन्द्रामरभवनं अप्सरोगणसंकुल रम्यम् ॥ २०९ ॥
शतसहस्रा ग्रन्था सहस्रपञ्चक द्व्यर्धमेक च ।
स्थापिता एकश्लोके सक्षेप एष ज्ञातव्य ॥ २१० ॥
[1] जीर्णे भोजनमात्रेय , कपिल प्राणिना दया ।
बृहस्पतिरविश्वास पञ्चाल स्त्रीषु मार्दवम् ॥ २११ ॥

---

1 पूर्वभुक्तान्ने जीर्णे सतीत्यर्थ ।

सोऊण अणाउट्टिं अणभीओ वज्जिऊण अणग तु
अणवज्जयमुवगओ धम्मरुई नाम अणगारो ॥ २१२ ॥
परिजाणिउण जीवे अजीवे जाणणा परिन्नाए ।
सावज्जजोगकरण परिजाणइ से इलापुत्तो ॥ २१३ ॥
पच्चक्खे इव दट्ठु जीवाजीवे य पुण्ण-पाव च ।
पच्चक्खाया अ जोगा सावज्जा तेअलिसुएण ॥ २१४ ॥

॥ उवग्घायनिज्जुत्ती सम्मत्ता ॥

उप्पत्ती निक्खेवो पय पयत्थो परूवणा वत्थू ।
अक्खेव पसिद्धि कमो पओअण फल नमुक्कारो ॥ १ ॥
उप्पन्नाणुप्पन्नो इत्थ नया णेगमस्सणुपन्नो ।
सेसाण उप्पन्नो जइ कत्तो तिविहसामित्ता ॥ २ ॥
समुट्ठाण वायणा लद्धि ओ य पढमे नयत्तिए तिविह ।
उज्जुसुअ-पढमवज्ज सेसनया लद्धिमिच्छन्ति ॥ ३ ॥
निन्हाइ दव्व भावोवउत्त ज कुज्ज सम्मदिट्ठी ओ ।

---

श्रुत्वा अनाकुट्टिमणभीतो वर्जयित्वाऽनङ्ग तु ।
अनवद्यकमुपगतो धर्मरुचिर्नाम अणगार ॥ २१२ ॥
परिज्ञाय जीवानजीवान् ज्ञान परिज्ञया ।
सावद्ययोगकरण परिजानाति तस्येलापुत्र ॥ २१३ ॥
प्रत्यक्षानिव दृष्ट्वा जीवाऽजीवांश्च पुण्य-पाप च ।
प्रत्याख्याताश्च योगा सावद्यास्तेतलिसुतेन ॥ २१४ ॥

॥ उपोद्घातनिर्युक्ति समाप्ता ॥

उत्पत्तिर्निक्षेप पद पदार्थ प्ररूपणा वस्तु ।
आक्षेप प्रसिद्धि क्रम प्रयोजन फल नमस्कार ॥ १ ॥
उत्पन्नाऽनुत्पन्नोऽत्र नया नैगमस्याऽनुत्पन्न ।
शेषाणामुत्पन्नो यदि कुत त्रिविधस्वामित्वात् ॥ २ ॥
समुत्थान वाचना लब्धिस्तु च प्रथमे नयत्रिके त्रिविधम् ।
ऋजुसूत्र-प्रथमवर्ज शेषनया लब्धिमिच्छन्ति ॥ ३ ॥
निह्नवादिर्द्रव्य भाव उपयुक्त यत् कुर्यात् सम्यग्दृष्टिस्तु ।

नेवाइअ पय दव्वभावसंकोअण पयत्थो ॥ ४ ॥
दुविहा परूवणा छप्पया य नवहा य छप्पयाइ णमो ।
किं कस्स केण व कहि केव चिर कइविहो अ भवे ॥ ५ ॥
किं जीवो तप्परिणओ अ पुव्वपडिवन्नओ जीवाण ।
जीवस्स वा जीवाण वा पडुच्च पडिवज्जमाण व ॥ ६ ॥
नाणवरणिज्जस्स य दसणमोहस्स तह खओवसमे ।
जीवमजीवे अट्ठसु भङ्गेसु अ होइ सव्वत्थ ॥ ७ ॥
उवओग पडुच्चन्तोमुहुत्तलद्धीइ होइ उ जहन्नो ।
उक्कोसट्ठिई छावट्ठिसागर अरिहाइ पचविहो ॥ ८ ॥
[1]संतपयपरूवणया ॥ ९ ॥
सतपय पडिवन्ने पडिवज्जते य मग्गणगईसु ।
इदियकाये जोए वेए अ कसाय लेसासु ॥ १० ॥
सम्मत्तनाणदसण सजय उवओगओ य आहारे ।
भासगपरित्तपज्जत्त सुहुमसन्नी य भवचरिमे ॥ ११ ॥

नैपातिक पद द्रव्यभावसकोचन पदार्थ ॥ ४ ॥
द्विविधा प्ररूपणा षट्पदा च नवधा च षट्पदाया नम ।
कि कस्य केन वा क्व कियत् चिर कतिविधश्च भवेत् ॥ ५ ॥
किं जीव तत्परिणतश्च पूर्वप्रतिपन्नो जीवानाम् ।
जीवस्य वा जीवाना वा प्रतीत्य प्रतिपद्यमान वा ॥ ६ ॥
ज्ञानावरणीयस्य च दर्शनमोहस्य तथा क्षयोपशम ।
जीवाजीवेष्वष्टसु भङ्गेषु च भवति सर्वत्र ॥ ७ ॥
उपयोग प्रतीत्यान्तर्मुहूर्तलब्धेर्भवति तु जघन्य ।
उत्कृष्टस्थिति षट्षष्टिसागरा अर्हदादि पञ्चविध ॥ ८ ॥
सत्पदप्ररूपणता ॥ ९ ॥
सत्पद प्रतिपन्ना प्रतिपद्यमानाश्च मार्गणागत्यो ।
इन्द्रियकाये योगे वेदे च कषाये लेश्यासु ॥ १० ॥
सम्यक्त्व-ज्ञान-दर्शन-सयतो-पयोगाश्च आहार ।
भाषक-परित्त-पर्याप्त-सूक्ष्मसज्ञी च भवचरम ॥ ११ ॥

१ इय गाथा पीठिकाया त्रयोदशी.

पलियासंखिज्ज इमो पडिवन्नो हुज्ज खित्तलोअस्स ।
सत्तसु चउदसभागेसु हुज्ज फुसणा वि एमेव ॥ १२ ॥

एग पडुच्च हिट्ठा तहेव नाणा जीवाण सव्वद्धा ।
अतर पडुच्चमेगं जहन्नमन्तोमुहुत्त तु ॥ १३ ॥

उक्कोसेण चेवं अद्धा परिअट्टिओ य देसूणो ।
नाणा जीवे नत्थि ओ भावे य भवे खओवसमे ॥ १४ ॥

जीवाणणतभागो पडिवन्नो सेसगा अणतगुणा ।
वत्थु अरहंताइ पचेव भावे तेसिमो हेऊ ॥ १५ ॥

आरोवणा य भयणा पुच्छण तह दावणा य निज्जवणा ।
नमुक्कार नमोकारो नोआइजुए व नवहा वा ॥ १६ ॥

मग्गो अ विप्पणासो आयारे विणयया सहायत्त ।
पचविहनमुक्कार करेमि एएहि हेऊहि ॥ १७ ॥

अडवीअ देसिअत्त तहेव निज्जामया समुद्दम्मि ।

---

पल्योपमान्यसंख्येयानि अय प्रतिपन्नो भवेत् क्षेत्रलोकस्य ।
सप्तसु चतुर्दशभागेषु भवेत् स्पर्शनाऽपि एवमेव ॥ १२ ॥

एक प्रतीत्याधस्तात् तथैव नाना जीवाना सर्वाद्धा ।
अन्तरं प्रतीत्यैकं जघन्यमन्तर्मुहूर्त तु ॥ १३ ॥

उत्कृष्टेन चैवमद्धा परिवर्तकश्च देशोन ।
नाना जीवे नास्ति तु भावे च भवेत् क्षयोपशमे ॥ १४ ॥

जीवानामनन्तभाग प्रतिपन्न शेषका अनन्तगुणा ।
वस्तु अर्हदादि पञ्चैव भावे तेषामय हेतु ॥ १५ ॥

आरोपणा च भजना पृच्छना तथा दापना च निर्यापणा
नमस्कारो नमस्कारो नो-आदियुतो वा नवधा वा ॥ १६ ॥

मार्गश्च विप्रणाश आचारो विनयता सहायत्वम् ।
पञ्चविधनमस्कारं करोम्येतैर्हेतुभि ॥ १७ ॥

अटव्या देशिकत्वं तथैव निर्यामका समुद्रे ।

छक्कायरक्खणट्ठा महगोवा तेण वुच्चन्ति ॥ १८ ॥
अडविं सपच्चवायं वोलित्ता देसिओवएसेण ।
पावन्ति जहिट्ठपुर भवाडवि पी तहा जीवा ॥ १९ ॥
पावन्ति निव्वुइपुर जिणोवइट्ठेग चेव मग्गेण ।
अडवीइ देसिअत्त एवं नेय जिणिदाण ॥ २० ॥
जह तमिह सत्थवाहं नमइ जणो तं पुर तु गतुमणो ।
परमुवगारित्तणओ निव्विग्घत्थ च भत्तीए ॥ २१ ॥
अरिहो उ नमुक्कारस्स भावओ खीणरागमयमोहो ।
मुक्खत्थीण पि जिणो तहेव जम्हा अओ अरिहा ॥ २२ ॥
संसाराडवीए मिच्छत्तऽन्नाणमोहिअपहाए ।
जेहिं कय देसिअत्त ते अरिहन्ते पणिवयामि ॥ २३ ॥
सम्मद्दसणादिट्ठो नाणेण य तेहिं सुट्ठु ओ लद्धो ।
चरण-करणेण पहिओ निव्वाणपहो जिणिंदेहि ॥ २४ ॥
सिद्धिवसहिमुवगया निव्वाणसुह च ते अणुप्पत्ता ।

---

षट्कायरक्षणार्थं महागोपास्तेनोच्यन्ते ॥ १८ ॥
अटवी सप्रत्यवाया गत्वा देशिकोपदेशेन ।
प्राप्नुवन्ति यथेष्टपुर भवाटवीमपि तथा जीवा ॥ १९ ॥
प्राप्नुवन्ति निर्वृतिपुरं जिनोपदिष्टेन चैव मार्गेण ।
अटव्या देशिकत्वमेव नेयं जिनेन्द्राणाम् ॥ २० ॥
यथा तमिह सार्थवाह नमति जनस्तत् पुर तु गन्तुमनाः ।
परमोपकारित्वतो, निर्विघ्नार्थं च भक्त्या ॥ २१ ॥
अर्हस्तु नमस्कारस्य भावत क्षीणरागमदमोह ।
मोक्षार्थिनामपि जिनस्तथैव यस्मादतोऽर्हन् ॥ २२ ॥
संसाराऽटव्या मिथ्यात्वाऽज्ञानमोहितपथायाम् ।
यै कृतं देशिकत्वं तानर्हत प्रणिपतामि ॥ २३ ॥
सम्यग्दर्शनदृष्टो ज्ञानेन च तै सुष्ठु तु लब्ध ।
चरण-करणेन प्रहितो निर्वाणपथो जिनेन्द्रै ॥ २४ ॥
सिद्धिवसतिमुपगता निर्वाणसुखं च तेऽनुप्राप्ता ।

सासयमव्वाबाह पत्ता अयरामर ठाण ॥ २५ ॥
पावति जहा पार सम्म निज्जामगा समुद्दस्स ।
भवजलहिस्स जिणिदा तहेव जम्हा अओ अरिहा ॥ २६ ॥
मिच्छत्तकालिआवायविरहिए सम्मत्तगज्जहपवाए ।
एगसमयेण पत्ता सिद्धिवसहिपट्टण पोआ ॥ २७ ॥
निज्जामगरयणाण अमूढनाणमइकन्नधाराण ।
बंदामि विणयपणओ तिविहेण तिदडविरयाण ॥ २८ ॥
पालन्ति जहा गावो गोवा अहिसावयाइदुग्गेहि ।
पउरतण-पाणिआणि य वणाणि पावन्ति तह चेव ॥ २९ ॥
जीवनिकाया गावो ज ते पालन्ति ते महागोवा ।
मरणाइभयाउ जिणा निव्वाणवण च पाविन्ति ॥ ३० ॥
तो उवगारित्तणओ नमो अरिहा भविअजीवलोगस्स ।
सव्वस्सेह जिणिंदा लोगुत्तमभावओ तहय ॥ ३१ ॥
रागद्दोसकसाए इदिआणि अ पच वि ।

---

शाश्वतमव्याबाधं प्राप्ता अजरामर स्थानम् ॥ २५ ॥
प्राप्नुवन्ति यथा पारं सम्यग् निर्यामका समुद्रस्य ।
भवजलधेर्जिनेन्द्रास्तथैव यस्मादतोऽर्हन् ॥ २६ ॥
मिथ्यात्वकालिकावातविरहिते सम्यक्त्व [1]गर्जभप्रवाते ।
एकसमयेन प्राप्ता सिद्धिवसतिपत्तन पोता ॥ २७ ॥
निर्यामकरत्नानाममूढज्ञानमतिकर्णधाराणाम् ।
वन्दे विनयप्रणतस्त्रिविधेन त्रिदण्डविरतानाम् ॥ २८ ॥
पालयन्ति यथा गा गोपा अहिंसाव्रतादिदुर्गै ।
प्रचुरतृण पानीयानि च वनानि प्रापयन्ति तथैव ॥ २९ ॥
जीवनिकाया गावो यत् ता पालयन्ति ते महागोपा ।
मरणादिभयाद् जिना निर्वाणवनं च प्रापयन्ति ॥ ३० ॥
तत उपकारित्वतो नमोऽर्हद्भ्यो भव्यजीवलोकस्य ।
सर्वस्येह जिनेन्द्रेभ्यो लोकोत्तमभावतस्तथा ॥ ३१ ॥
राग-द्वेषकषायान् इन्द्रियाणि च पञ्चाऽपि ।

---

1 गर्जभस्त्वनुकूल.

परीसहे उवसग्गे नामयन्ता नमो अरिहा ॥ ३२ ॥
इन्दिअविसयकसाये परीसहे वेअणाओ उवसग्गे ।
एए अरिणो हन्ता अरिहन्ता तेण वुच्चन्ति ॥ ३३ ॥
अट्ठविह वि अ कम्म अरिभूअ होइ सव्वजीवाण ।
त कम्ममरि हन्ता अरिहन्ता तेण वुच्चन्ति ॥ ३४ ॥
अरिहन्ति वदणनमसणाणि अरिहन्ति पूअसक्कारे ।
सिद्धिगमण च अरिहा अरहन्ता तेण वुच्चन्ति ॥ ३५ ॥
देवासुरमणुअेसु अरिहा पूआ सुरुत्तमा जम्हा ।
अरिणो रय च हन्ता अरहता तेण वुच्चन्ति ॥ ३६ ॥
अरिहन्तनमुक्कारो जीव मोएइ भवसयसहस्साओ ।
भावेण कीरमाणो होइ पुणो बोहिलाभाए ॥ ३७ ॥
अरिहन्तनमुक्कारो धन्नाण भवक्खय करिन्ताण ।
हिअय अणुमोअतो वि विसुत्तियावारओ होइ ॥ ३८ ॥
अरिहन्तनमुक्कारो एव खलु वण्णिओ महत्थु त्ति ।

---

परीषहानुपसर्गान् नमयद्भ्यो नमोऽर्हद्भ्य ॥ ३२ ॥
इन्द्रिय-विषय-कषायान् परीषहान् वेदना उपसर्गान् ।
एतानरीन् हन्तारोऽर्हन्तस्तेन उच्यन्ते ॥ ३३ ॥
अष्टविधमपि च कर्माऽरिभूत भवति सर्वजीवानाम् ।
तत्कर्मारि हन्तारोऽर्हन्तस्तेनोच्यन्ते ॥ ३४ ॥
अर्हन्ति वन्दन-नमस्यनानि अर्हन्ति पूजा-सत्कारान् ।
सिद्धिगमनस्य चार्हा अर्हन्तस्तेनोच्यन्ते ॥ ३५ ॥
देवाऽसुर-मनुजेषु अर्हा पूजाया सुरोत्तमेभ्यो यस्मात् ।
अरे रय च हन्तारोऽर्हन्तस्तेनोच्यन्ते ॥ ३६ ॥
अर्हन्नमस्कारो जीव मोचयति भवशतसहस्रात् ।
भावेन क्रियमाणो भवति पुनर्बोधिलाभाय ॥ ३७ ॥
अर्हन्नमस्कारो धन्याना भवक्षय कुर्वताम् ।
हृदयमनुमोदमानोऽपि [1]विश्रोतसिकावारको भवति ॥ ३८ ॥
अर्हन्नमस्कार एवं खलु वर्णितो महार्थ इति ।

---

[1] विश्रोतसिका अपध्यानम् ।

जो मरणम्मि उवगए अभिक्खणं कीरइ बहुसो ॥ ३९ ॥
अरिहन्तनमुक्कारो सव्वपावप्पणासणो ।
मगलाण च सव्वेसि पढम हवइ मगल ॥ ४० ॥
कम्मे सिप्पे य विज्जा य मन्ते य जोगे य आगमे ।
अत्थ जत्ता अभिप्पाए तवे कम्मक्खए इअ ॥ ४१ ॥
कम्म जमणायरिओवएसिअ सिप्पमन्नहाऽभिहिअं ।
किसि-वाणिज्जाइअं घड-लोहाराइभेअ च ॥ ४२ ॥
जो सव्वकम्मकुसलो जो जत्थ सुपरिनिट्ठिओ होइ ।
सज्झगिरिसिद्धओ विअ स कम्मसिद्धुत्ति विन्नेयो ॥ ४३ ॥
जो सव्वसिप्पकुसलो जो वा जत्थ सुपरिनिट्ठिओ होइ ।
कोकासवड्ढइ इव साइसओ सिप्पसिद्धो सो ॥ ४४ ॥
इत्थी विज्जाभिहिआ पुरिसो मन्तुत्ति तव्विसेसोऽय ।
विज्जा ससाहणा वा साहणरहिओ अ मन्तुत्ति ॥ ४५ ॥
विज्जाण चक्कवट्टी विज्जासिद्धो स जस्स वेगावि ।

---

यो मरणे उपगतेऽभिक्षणं क्रियते बहुश ॥ ३९ ॥
अर्हन्नमस्कार सर्वपापप्रणाशन ।
मङ्गलाना च सर्वेषा प्रथम भवति मङ्गलम् ॥ ४० ॥
कर्मणि शिल्पे च विद्याया व मन्त्रे च योगे चागमे ।
अर्थे यात्रायामभिप्राये तपसि कर्मक्षये इति ॥ ४१ ॥
कर्म यदनाचार्योपदेशितं शिल्पमन्यथाऽभिहितम् ।
कृषि–वाणिज्यादिकं घट–लोहकारादिभेद च ॥ ४२ ॥
य सर्वकर्मकुशल यो यत्र सुपरिनिष्ठितो भवति ।
सह्यगिरिसिद्धक इव स कर्मसिद्ध इति विज्ञेय ॥ ४३ ॥
य सर्वशिल्पकुशल यो वा यत्र सुपरिनिष्ठितो भवति ।
कोकासवर्धकिरिव सातिशय शिल्पसिद्ध स ॥ ४४ ॥
स्त्री विद्याऽभिहिता पुरुषो मन्त्र इति तद्विशेषोऽयम् ।
विद्या ससाधना वा साधनरहितश्च मन्त्र इति ॥ ४५ ॥
विद्याना चक्रवर्ती विद्यासिद्ध. स यस्य वैकापि ।

सिज्झिज्ज महाविज्जा विज्जासिद्धोऽज्जखवडु व्व ॥ ४६ ॥
साहीणसव्वमन्तो बहुमन्तो वा पहाणमन्तो वा ।
नेओ स मन्तसिद्धो थभागरिसु व्व साइसओ ॥ ४७ ॥
सव्वे वि दव्वजोगा परमच्छेरयफलाऽहवेगो वि ।
जस्सेह हुज्ज सिद्धो स जोगसिद्धो जहा समिओ ॥ ४८ ॥
आगमसिद्धो सव्वगपारओ गोअमु व्व गुणरासी ।
पउरत्थो अत्थपरु व्व मम्मणो अत्थसिद्धो उ ॥ ४९ ॥
जो निच्चसिद्धजुत्तो लद्धवरो जो य तुडिआइ व्व ।
सो किर जत्तासिद्धोऽभिप्पाओ बुद्धिपज्जाओ ॥ ५० ॥
विउला विमला सुहुमा जस्स मई जो चउव्विहाए व ।
बुद्धीए सपन्नो स बुद्धिसिद्धो, इमा सा य ॥ ५१ ॥
उप्पत्तिआ, य वेणइआ, कम्मिआ, पारिणामिआ ।
बुद्धी चउव्विहा वुत्ता पचमा नोवलब्भइ ॥ ५२ ॥
पुव्वमदिट्ठमसुअमवेइअतक्खणविसुद्धगाहिअत्था ।

---

सिध्येद् महाविद्या विद्यासिद्ध आर्यखपट इव ॥ ४६ ॥
स्वाधीनसर्वमन्त्रो बहुमन्त्रो वा प्रधानमन्त्रो वा ।
ज्ञेय स मन्त्रसिद्ध स्तम्भाकर्ष इव सातिशय ॥ ४७ ॥
सर्वेऽपि द्रव्ययोगा परमाश्चर्यफला अथैकोऽपि ।
यस्येह भवेत् सिद्ध स योगसिद्धो यथा समित ॥ ४८ ॥
आगमसिद्ध सर्वाङ्गपारगो गौतम इव गुणराशि ।
प्रचुरार्थोऽर्थपर इव मम्मणोऽर्थसिद्धस्तु ॥ ४९ ॥
यो नित्यसिद्धयुक्तो लब्धवरो यश्च तुण्डिकादिरिव ।
स किल यात्रासिद्धोऽभिप्रायो बुद्धिपर्याय ॥ ५० ॥
विपुला विमला सूक्ष्मा यस्य मतिर्यश्चतुर्विधयैव ।
बुद्ध्या संपन्न स बुद्धिसिद्ध, इयं सा च ॥ ५१ ॥
औत्पत्तिकी, वैनयिकी, कर्मजा, पारिणामिकी ।
बुद्धिश्चतुर्विधा उक्ता पञ्चमी नोपलभ्यते ॥ ५२ ॥
पूर्वादृष्टा-ऽश्रुता-ऽवेदित-तत्क्षणविशुद्धगृहीतार्था ।

अव्वाहयफलजोगा बुद्धी उप्पात्तिआ नाम ॥ ५३ ॥
भरहसिल पणिय रुक्खे खुड्डग पड सरड काय उच्चारे ।
गय घयण गोल खभे खुड्डग मग्गित्थि पइ पुत्ते ॥ ५४ ॥
भरह-सिल-मिंढ-कुक्कुड-तिल-वालुअ-हत्थि-अगड-वणसडे ।
पायस-अइआ-पत्ते खाडहिला पंच पिअरो अ ॥ ५५ ॥
महुसित्थ मुद्दिअके य नाणए भिक्खु चेडागनिहाणे ।
सिक्खा य अत्थसत्थे इच्छाइ मह सयसहस्से ॥ ५६ ॥
भयनित्थरणसमत्था तिवग्गसुत्तत्थगहिअपेयाला ।
उभयलोगफलवई विणयसमुत्था हवइ बुद्धी ॥ ५७ ॥
निमित्ते अत्थसत्थे य लेहे गणिये कूव अस्से य ।
गद्दह लक्खण गंठी अगए गणिआ य रहिअे य ॥ ५८ ॥
सीआ साडी दीह च तण अवसव्वय च कुंचस्स ।
निव्वोदए य गोणे घोडगपडण च रुक्खाओ ॥ ५९ ॥
उवओगदिट्ठसारा कम्मपसगपरिघोलणविसाला ।

---

अव्याहतफलयोगा बुद्धिरौत्पत्तिकी नाम ॥ ५३ ॥
भरतशिला [1]पणितं वृक्ष [2]क्षुद्रकं पट सरट काक उच्चार ।
गजो भाण्डो गोल स्तम्भ क्षुद्रको मार्गस्त्री पति पुत्र ॥ ५४ ॥
भरत-शिला-[3]मिण्ढ-कुक्कुट-तिल-वालुका-हस्ति-अवट-वन-खण्डानि ।
पायसा-ऽजिका-पत्राणि [4]तरुमर्कटिका पञ्च पितरश्च ॥ ५५ ॥
मधुसिक्थ मुद्रिका अङ्कश्च नाणकं भिक्षुश्चेटकनिधानम् ।
शिक्षा चार्थशास्त्र इच्छया मम, शतसहस्रम् ॥ ५६ ॥
भयनिस्तरणसमर्था त्रिवर्गसूत्रार्थगृहीतपेयाला ।
उभयलोकफलवती विनयसमुत्था भवति बुद्धि ॥ ५७ ॥
निमित्तमर्थशास्त्र च लेखो गणित कूपोऽश्वश्च ।
गर्दभो लक्षण ग्रन्थिरगदो गणिका च रथिकश्च ॥ ५८ ॥
शीत शाटी दीर्घं च तृणमपसव्यकं च क्रौञ्चस्य ।
नीव्रोदकश्च गौर्घोटकपतनं च वृक्षात् ॥ ५९ ॥
उपयोगदृष्टसारा कर्मप्रसङ्गपरिघोलनविशाला ।

---

१ पण. । २ क्षुद्रकं मुद्रिका । ३ मिण्ढो मेष ।४ खीसकोली । इति गूर्जरभाषया

साहुक्कारफलवई कम्मसमुत्था हवइ बुद्धी ॥ ६० ॥
हेरन्निए करिसए कोलिअ डोवे अ मुत्ति घय पवेओ।
उन्नाग वड्ढई पूइए घड–चित्तकारे य ॥ ६१ ॥
अणुमाण–हेउ–दिट्ठन्तसाहिआ वयविवागपरिणामा ।
हिअनिस्सेसफलवई बुद्धी पारिणामिआ नाम ॥ ६२ ॥
अभये सिट्ठि कुमारे देवीउ दिओदए हवइ राया ।
साहू अ नदिसेणो धणदत्ते सावग अमच्चे ॥ ६३ ॥
खमए अमच्चपुत्तो चाणक्के चेव थूलभद्दे च ।
नासिक्के सुन्दरी नदे वइरे परिणामिआ बुद्धी ॥ ६४ ॥
चलणाहण आमडे मणी य सप्पे य खग्गी थूभिदे ।
परिणामिअबुद्धीए एवमाइ उदाहरणा ॥ ६५ ॥
न किलम्मइ जो तवसा सो तवसिद्धो दढपहारिव्व ।
सो कम्मक्खयसिद्धो जो सव्वक्खीणकम्मसो ॥ ६६ ॥
दीहकालरय ज तु कम्मं से सिअमट्ठहा ।

---

साधुकारफलवती कर्मसमुत्था भवति बुद्धि ॥ ६० ॥
हैरण्यक कर्षक कोलिको डोबश्च मुक्ता घृतं प्रवेक ।
उन्नाको वर्धकि पौपिको घट–चित्रकारश्च ॥ ६१ ॥
अनुमान-हेतु-दृष्टान्तसाधिता वयोविपाकपरिणामा ।
हितनि शेषफलवती बुद्धि पारिणामिकी नाम ॥ ६२ ॥
अभय' श्रेष्ठी कुमारो देवी उदितोदयो भवति राजा।
साधुश्च नन्दिषेणो धनदत्त श्रावकोऽमात्य ॥ ६३ ॥
क्षपकोऽमात्यपुत्रश्चाणाक्यश्चैव स्थूलभद्रश्च ।
नाशिक्ये सुन्दरी नन्दो वज्र , पारिणामिकी बुद्धि ॥ ६४ ॥
चरणाघात आमलक मणिश्च सर्पश्च खड्गी स्तूपेन्द्रौ ।
पारिणामिकबुद्धेरेवमादय उदाहरणा ॥ ६५ ॥
न क्लाम्यति यस्तपसा स तप सिद्धो दृढप्रहारीव ।
स कर्मक्षयसिद्धो य सर्वक्षीणकर्मांश ॥ ६६ ॥
दीर्घकालरजो यत् तु कर्म तस्य सितमष्टधा ।

सिअ धंत ति सिद्धस्स सिद्धत्तमुवजायइ ॥ ६७ ॥
नाऊण वेअणिज्ज अइबहुअ च आउअ च थोवाग ।
गतूण समुग्घाय खवन्ति कम्म निरवसेस ॥ ६८ ॥
दड कवाडे मथंतरे य सहरणया सरीरत्थे ।
भासा जोग निरोहे सेलेसी सिज्झणा चेव ॥ ६९ ॥
जह उल्ला साडीआ आसुसुक्कइ विरल्लिआ सन्ती ।
तह कम्मलहुअसमए वच्चन्ति जिणा समुग्घाये ॥ ७० ॥
लाउ अ एरडफल अग्गी धूमे य इसु धेणुविमुक्के ।
गइपुव्वपओगेण एव सिद्धाण वि गइओ ॥ ७१ ॥
कहिं पडियहा सिद्धा कहि सिद्धा पइट्ठिआ ? ।
कहि बुदि चइत्ताण कत्थ गन्तूण सिज्झइ ? ॥ ७२ ॥
अलोए पडिहया सिद्धा लोअग्गे अ पइट्ठिआ ।
इहं बुदि चइत्ताण तत्थ गन्तूण सिज्झइ ॥ ७३ ॥
ईसिपब्भाराए सीआए जोअणम्मि लोगन्तो ।

---

सित ध्मातमिति सिद्धस्य सिद्धत्वमुपजायते ॥ ६७ ॥
ज्ञात्वा वेदनीयमातिबहुकं चायुश्च स्तोककम् ।
गत्वा समुद्घातं क्षिपन्ति कर्म निरवशेषम् ॥ ६८ ॥
दण्ड कपाटो मन्थान्तराणि च संहरणता शरीरस्थ ।
भाषा-योगनिरोधान् शैलेषी सेधना चैव ॥ ६९ ॥
यथाऽऽर्द्रा शाटी आशु शुष्यति विस्तीर्णा सती ।
तथा कर्मलघुकसमये व्रजन्ति जिना समुद्घातान् ॥ ७० ॥
अलाबुश्चैरण्डफलमग्निर्धूमश्च इषुर्धनुर्विमुक्त ।
गतिपूर्वप्रयोगेण एवं सिद्धानामपि गतय ॥ ७१ ॥
कुत्र प्रतिहता सिद्धा कुत्र सिद्धा ? प्रतिष्ठिता ।
कुत्र शरीरं त्यक्त्वा कुत्र गत्वा सिध्यति ? ॥ ७२ ॥
अलोके प्रतिहता सिद्धा लोकाग्रे च प्रतिष्ठिता ।
इह शरीरं त्यक्त्वा तत्र गत्वा सिध्यति ॥ ७३ ॥
ईषत्प्राग्भाराया सीताया योजने लोकान्त.

बारसहिं जोयणेहिं सिद्धी सव्वत्थसिद्धाओ ॥ ७४ ॥
निम्मलदगरयवन्ना तुसार–गोखीर–हारसरिवन्ना ।
उत्ताणयछत्तयसठिआ अ भणिआ जिणवरेहिं ॥ ७५ ॥
एगा जोअणकोडी बायालीस च सयसहस्साइ ।
तीस चेव सहस्सा दो चेव सया अउणवन्ना ॥ ७६ ॥
बहुमज्झदेसभाए अट्ठेव य जोअणाइ बाहुल्लं ।
चरिमन्तेसु अ तणुई अगुलसखिज्जईभाग ॥ ७७ ॥
गंतूण जोअण तु परिहाइ अगुलपुहुत्त ।
तीसे वि अ पेरन्तो मच्छिअपत्ता य तणुअयरा ॥ ७८ ॥
ईसीपब्भाराए उवरि खलु जोअणस्स जो कोसो ।
कोसस्स य छब्भाए सिद्धाणोगाहणा भणिआ ॥ ७९ ॥
तिण्णि सया तित्तीसा धणुत्तिभागो अ कोसछब्भाए ।
ज परमोगाहोऽय तो ते कोसस्स छब्भाए ॥ ८० ॥
उत्ताणउ व्व पासिल्लउ व्व अहवा निसन्नओ चेव ।

---

द्वादशभिर्योजनै सिद्धि सर्वार्थसिद्धात् तु ॥ ७४ ॥
निर्मलदकरजोवर्णा तुषार–गोक्षीर–हारसदृशवर्णा ।
उत्तानकच्छत्रसंस्थिता च भणिता जिनवरै ॥ ७५ ॥
एका योजन कोटी द्वात्रिंशच्च शतसहस्राणि ।
त्रिंशच्चैव सहस्राणि द्वे एव शते एकोनपञ्चाशत् ॥ ७६ ॥
बहुमध्यदेशभागे अष्टैव च योजनानि बाहुल्यम् ।
चरमान्तयोश्च तन्वी अङ्गुलसङ्ख्येयभागम् ॥ ७७ ॥
गत्वा योजनं तु परिभाति अङ्गुलपृथक्त्वम् ।
तस्या अपि च पर्यन्तो मक्षिकपत्रा च तनुकतरा ॥ ७८ ॥
ईषत्प्रागभारायामुपरि खलु योजनस्य य कोश ।
क्रोशस्य च षड्भागे सिद्धानामवगाहना भणिता ॥ ७९ ॥
त्रीणि शतानि त्रयस्त्रिंशद् धनुस्त्रिभागश्च क्रोशषड्भाग ।
यत् परमावगाहोऽय ततस्ते क्रोशस्य षड्भागे ॥ ८० ॥
उत्तानक इव पार्श्वस्थ इव अथवा निषण्णकश्चैव ।

जो जह करेइ कालं सो तह उववज्जए सिद्धो ॥ ८१ ॥
इह भवभिन्नागारो कम्मवसाओ भवन्तरे होइ।
न य त सिद्धस्स जओ तम्मि वि तो सो तयागारो ॥ ८२ ॥
जं संठाण च इह भव चइन्तस्स चरिमसमयम्मि।
आसी अ पएसघण तं सठाण तहिं तस्स ॥ ८३ ॥
दीह वा हस्स वा जं चरिमभवे हविज्ज सठाण।
तत्तो तिभागहीणा सिद्धाणोगाहणा भणिआ ॥ ८४ ॥
तिन्नि सया तित्तीसा धणुत्तिभागो य होइ बोधव्वो।
एसा खलु सिद्धाणं उक्कोसोगाहणा भणिआ ॥ ८५ ॥
चत्तारि अ रयणीओ रयणितिभागूणिआ अ बोधव्वा।
एसा खलु सिद्धाण मज्झिम ओगहणा भणिआ ॥ ८६ ॥
एगा य होइ रयणी अट्ठेव य अंगुलाइ साहिआ।
एसा खलु सिद्धाण जहन्न ओगाहणा भणिआ ॥ ८७ ॥
ओगाहणाइ सिद्धा भवतिभागेण हुति परिहीणा।

---

यो यथा करोति काल स तथोपपद्यते सिद्ध ॥ ८१ ॥
इह भवभिन्नाकार कर्मवशाद् भवान्तरे भवति।
न च तत् सिद्धस्य यतस्तस्मिन्नपि तत स तदाकार ॥ ८२ ॥
यत् संस्थानं च इह भवं त्यजतश्चरमसमये।
आसीच्च प्रदेशघनं तत् संस्थानं तत्र तस्य ॥ ८३ ॥
दीर्घं वा ह्रस्वं वा यच्चरमभवे भवेत् संस्थानम्।
ततस्त्रिभागहीना सिद्धानामवगाहना भणिता ॥ ८४ ॥
त्रीणि शतानि त्रयस्त्रिंशद् धनुस्त्रिभागश्च भवति बोद्धव्य।
एषा खलु सिद्धाना उत्कृष्टाऽवगाहना भणिता ॥ ८५ ॥
चतस्रश्च रत्न्यो रत्नित्रिभागोना च बोद्धव्या।
एषा खलु सिद्धाना मध्यमाऽवगाहना भणिता ॥ ८६ ॥
एका च भवति रत्निरष्टैव चाङ्गुलानि साधिका।
एषा खलु सिद्धाना जघन्याऽवगाहना भणिता ॥ ८७ ॥
अवगाहनायां सिद्धा भवत्रिभागेन भवन्ति परिहीना।

संठाणमणित्थत्थं जरा–मरणविप्पमुक्काणं ॥ ८८ ॥
जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का ।
अन्नुन्नसमोगाढा पुट्ठा सव्वे वि लोगन्ते ॥ ८९ ॥
फुसइ अणन्ते सिद्धे सव्वपएसेहि नियमसो सिद्धा ।
ते वि असंखिज्जगुणा देसपएसेहि जे पुट्ठा ॥ ९० ॥
असरीरा जीवघणा उवउत्ता दंसणे य नाणे य ।
सागारमणागारं लक्खणमेअं तु सिद्धाणं ॥ ९१ ॥
केवलनाणोउत्ता जाणंति सव्वभाव–गुणभावे ।
पासन्ति सव्वओ खलु केवलदिट्ठीहि णंताहि ॥ ९२ ॥
नाणम्मि दंसणम्मि य इत्तो एगयरम्मि उवउत्ता ।
सव्वस्स केवलिस्स जुगवं दो नत्थि उवओगा ॥ ९३ ॥
न वि अत्थि माणुसाणं तं सुखं न वि अ सव्वदेवाणं ।
जं सिद्धाणं सुक्खं अव्वाबाहं उवगयाणं ॥ ९४ ॥
सुरगणसुहं समग्गं सव्वद्धा पिंडिअं अणंतगुणं ।

---

संस्थानमनित्थंस्थं जरा–मरणविप्रमुक्तानाम् ॥ ८८ ॥
यत्र चैकः सिद्धस्तत्राऽनन्ता भवक्षयमुक्ताः ।
अन्योऽन्यसमवगाढाः स्पृष्टाः सर्वेऽपि लोकान्ते ॥ ८९ ॥
स्पृशन्ति अनन्तान् सिद्धान् सर्वप्रदेशैर्नियमशः सिद्धाः ।
तेऽपि असंख्यगुणा देशप्रदेशैर्ये स्पृष्टाः ॥ ९० ॥
अशरीरा जीवघना उपयुक्ता दर्शने च ज्ञाने च ।
साकारमनाकारं-लक्षणमेतत् तु सिद्धानाम् ॥ ९१ ॥
केवलज्ञानोपयुक्ता जानन्ति सर्वभाव–गुणभावान् ।
पश्यन्ति सर्वतः खलु केवलदृष्टिभिरनन्ताभिः ॥ ९२ ॥
ज्ञाने दर्शने च इत एकतरस्मिन् उपयुक्ताः ।
सर्वस्य केवलिनो युगपद् द्वौ न स्त उपयोगौ ॥ ९३ ॥
नाप्यस्ति मनुष्याणां तत् सुखं नापि च सर्वदेवानाम् ।
यत् सिद्धानां सौख्यमव्याबाधमुपगतानाम् ॥ ९४ ॥
सुरगणसुखं समग्रं सर्वाद्धा पिण्डितमनन्तगुणम् ।

नवि पावइ मुत्तिसुह णंताहिं विवग्गवग्गूहि ॥ ९५ ॥
सिद्धस्स सुहरासी सवद्धा पिंडिओ जइ हविज्जा ।
सो णतवग्गभइओ सव्वागासे न माइज्जा ॥ ९६ ॥
जह नाम कोइ मिच्छो नगरगुणबहुविहे वि यागन्तो ।
न चएइ परिकहेउ उवमाए तहिं अ सन्तीए ॥ ९७ ॥
इअ सिद्धाण सुक्ख अणोवम नत्थि तस्स ओवम्म ।
किंचि विसेसेणित्ता सारिक्खमिणं सुणह वुच्छं ॥ ९८ ॥
जह सव्वकामगुणिअं पुरिसो भुत्तूण भोअग कोइ ।
तम्हा छुट्टाविमुक्को अच्छिज्ज जहा अमयतित्तो ॥ ९९ ॥
इअ सव्वकालतित्ता अउलं निव्वाणमुवगया सिद्धा ।
सासयमव्वाबाहं चिट्ठन्ति सुहं सुही पत्ता ॥ १०० ॥
सिद्ध त्ति य बुद्धत्ति य पारगय त्ति य परपरगय त्ति ।
उम्मुक्ककम्मकवया अजरा अमरा असगा य ॥ १०१ ॥
निच्छिन्नसव्वदुक्खा जाइजरामरणबंधणविमुक्का ।

---

नापि प्राप्नोति मुक्तिसुखमनन्तैरपि वर्गवर्गै ॥ ९५ ॥
सिद्धस्य सुखराशि सर्वाद्धा पिण्डितो यदि भवेत् ।
साऽनन्तवर्गभक्त सर्वाकाशे न मायात् ॥ ९६ ॥
यथा नाम कोऽपि म्लेच्छो नगरगुणबहुविधानपि जानन् ।
न शक्नोति परिकथयितु उपमया तत्र च सत्या ॥ ९७ ॥
इति सिध्धाना सौख्यमनोपम नास्ति तस्यौपम्यम् ।
किञ्चिद् विशेषणयित्वा सादृश्यमिदं श्रृणुत वक्ष्ये ॥ ९८ ॥
यथा सर्वकामगुणितं पुरुषो भुक्त्वा भोजनं कोऽपि ।
तम्मात् क्षुद्विमुक्त आसीत यथा अमृततृप्त ॥ ९९ ॥
इति सर्वकालतृप्ता अतुलं निर्वाणमुपगता सिद्धा ।
शाश्वतमव्याबाधं तिष्ठान्ति सुख सुखिन प्राप्ता ॥ १०० ॥
सिद्धा इति च बुद्धा इति च पारगता इति च परम्परागता इति ।
उन्मुक्तकर्मकवचा अजरा अमरा असङ्गाश्च ॥ १०१ ॥
निस्तीर्णसर्वदु खा जाति–जरा–मरणबन्धनविमुक्ता ।

अव्वाबाहं सुक्खं अणुहुन्ति सासयं सिद्धा ॥ १०२ ॥
सिद्धाण नमुक्कारो जीव मोएइ भवसयसहस्साओ ।
भावेण कीरमाणो होइ पुणो बोहिलाभाए ॥ १०३ ॥
सिद्धाण नमुक्कारो धन्नाण भवक्खय कुणताण ।
हिअए अणुमोअतो वि विसुत्तिआवारओ होइ ॥ १०४ ॥
सिद्धाण नमुक्कारो एव खलु वण्णिओ महत्थुत्ति ।
जो मरणम्मि उवगए अभिक्खण कीरइ बहुसो ॥ १०५ ॥
सिद्धाण नमुक्कारो सव्वपावप्पणासणो ।
मगलाण च सव्वेसि बीअ हवइ मगल ॥ १०६ ॥
नाम ठवणा दविए भावम्मि चउव्विहो उ आयरिओ ।
दव्वम्मि एगभविआइ लोइए सिप्पसत्थाइ ॥ १०७ ॥
पंचविहं आयार आयरमाणा तहा पयासता ।
आयार दसता आयरिआ तेण वुच्चन्ति ॥ १०८ ॥
आयारो नाणाई तस्सायरणा पभासणाओ अ ।

---

अव्याबाध सौख्यमनुभवन्ति शाश्वत सिद्धा ॥ १०२ ॥
सिद्धाना नमस्कारो जीव मोचयति भवशतसहस्रात् ।
भावेन क्रियमाणो भवति पुनर्बोधिलाभाय ॥ १०३ ॥
सिद्धाना नमस्कारो धन्याना भवक्षय कुर्वताम् ।
हृदये अनुमोद्यमानोऽपि विश्रोतसिकावारको भवति ॥ १०४ ॥
सिद्धाना नमस्कार एवं खलु वर्णितो महार्थ इति ।
यो मरणे उपगतेऽभिक्षण क्रियते बहुश ॥ १०५ ॥
सिद्धाना नमस्कार सर्वपापप्रनाशन ।
मङ्गलाना च सर्वेषा द्वितीयं भवति मङ्गलम् ॥ १०६ ॥
नाम स्थापना द्रव्यं भावश्चतुर्विधस्तु आचार्य ।
द्रव्ये एकभविकादिर्लौकिके शिल्प-शास्त्रादि ॥ १०७ ॥
पञ्चविधमाचारमाचरमाणास्तथा प्रकाशमाना ।
आचारं दर्शयन्त आचार्यास्तेनोच्यन्ते ॥ १०८ ॥
आचारो ज्ञानादि तस्याचरणात् प्रभासनाच्च ।

जे ते भावायरिआ भावायारोवउत्ता य ॥ १०९ ॥
आयरिअनमुक्कारो जीव० ।
भावेण० ॥ ११० ॥
आयरिअनमुक्कारो धन्नाण० ।
हिअय० ॥ १११ ॥
आयरिअनमुक्कारो एव खलु० ।
जो मरणे० ॥ ११२ ॥
आयरिअनमुक्कारो सव्वपावप्पणासणो ।
मंगलाण च सव्वेसिं तइअ होइ मंगलं ॥ ११३ ॥
नामं ठवणा दविए भावम्मि चउव्विहो उवज्झायो ।
दव्वे लोइअसिप्पाइ निन्हवा वा इमे भावे ॥ ११४ ॥
बारसंगो जिणक्खाओ सज्झाओ कहिओ बुहेहिं ।
तं उवइसंति जम्हा उवज्झाया तेण वुच्चंति ॥ ११५ ॥
'उ' त्ति उवओगकरणे 'झ'त्ति अ झाणस्स होइ निद्देसे ।

---

ये ते भावाचार्या भावाचारोपयुक्ताश्च ॥ १०९ ॥
आचार्यनमस्कारो जीव मोचयति भवशतसहस्रात् ।
भावेन क्रियमाणो भवति पुनर्बोधिलाभाय ॥ ११० ॥
आचार्यनमस्कारो धन्याना भवक्षय कुर्वताम् ।
हृदयेऽनुमोद्यमानोऽपि विश्रोतसिकावारको भवति ॥ १११ ॥
आचार्यनमस्कार एव खलु वर्णितो महार्थ इति ।
यो मरणे उपगते अभिक्षणं क्रियते बहुश ॥ ११२ ॥
आचार्यनमस्कार सर्वपापप्रनाशन ।
मङ्गलाना च सर्वेषा तृतीयं भवति मङ्गलम् ॥ ११३ ॥
नाम स्थापना द्रव्यं भावश्चतुर्विध उपाध्याय ।
द्रव्ये लौकिकशिल्पादि निन्हवा वा इमे भावे ॥ ११४ ॥
द्वादशाङ्गो जिनाख्यात स्वाध्याय कथितो बुधै ।
तमुपदिशन्ति यस्माद् उपाध्यायास्तेनोच्यन्ते ॥ ११५ ॥
'उ' इति उपयोगकरणे 'झ' इति च ध्यानस्य भवति निर्देश ।

एएण हुन्ति उज्झा एस अन्नो वि पज्जाओ ॥ ११६ ॥
'उ'त्ति उवओगकरणे 'प'त्ति य पावपरिवज्जणे होइ ।
'झ' त्ति य झाणस्स कए 'उ' त्ति य ओसक्कणा कम्मे ॥११७॥
[1]उवज्झायनमुक्कारो जीव० ।
भावेण० ॥ ११८ ॥
उवज्झायनमुक्कारो धन्नाण० ।
हिअय० ॥ ११९ ॥
उवज्झायनमुक्कारो एवं० ।
जो मरणम्मि० ॥ १२० ॥
उवज्झायनमुक्कारो सव्वप्पाव० ।
मंगलाणं च सव्वेभि चउत्थ होइ मंगलं ॥ १२१ ॥
नाम ठवणा साहू दव्वसाहू अ भावसाहू अ ।
दव्वम्मि लोइआई भावम्मि य सजयो साहू ॥ १२२ ॥
घड–पड–रहमाईणि य साहन्ता हुन्ति दव्वसाहु त्ति ।

---

एतेन भवन्ति 'उज्झा' एषोऽन्योऽपि पर्याय ॥ ११६ ॥
'उ' इति उपयोगकरणे 'प' इति च पापपरिवर्जनो भवति ।
'झ' इति च ध्यानस्य कृते 'उ' इति च अपनयनं कर्मणि ॥ ११७ ॥
[1]उपाध्यायनमस्कार जीवं ... ... ।
भावेन ... ... ॥ ११८ ॥
उपाध्यायनमस्कार धन्याना ... . ।
हृदये ... ... .. ॥ ११९ ॥
उपाध्यायनमस्कार एवं ... ।
यो मरणे . ... ... ॥ १२० ॥
उपाध्यायनमस्कार सर्वपाप ... ... ।
मङ्गलाना च सर्वेषा चतुर्थं भवति मङ्गलम् ॥ १२१ ॥
नाम स्थापना साधवो द्रव्यसाधवो भावसाधवश्च ।
द्रव्ये लौकिकादिर्भावे च सयत साधु ॥ १२२ ॥
घट–पट–रथादीनि च साधयन्तो भवन्ति द्रव्यसाधव इति ।

---

१ अवशिष्ट पूर्वागतसिद्धनमस्कारवत् ।

अहवा वि दव्वभूआ ते हुंति दव्वसाहु त्ति ॥ १२३ ॥
निव्वाणसाहए जोए जम्हा साहंति साहुणो ।
समा य सव्वभूएसु तम्हा ते भावसाहुणो ॥ १२४ ॥
किं पिच्छसि साहूण तवं च नियमं च संजमगुणं वा ।
तो वदसि साहूणं एअं मे पुच्छिओ साह ? ॥ १२५ ॥
विसयसुहनियत्ताणं विसुद्धचारित्त-नियमजुत्ताणं ।
तच्चगुणसाहगाणं सहायकिच्चुज्जुआण नमो ॥ १२६ ॥
असहाये सहायत्तं करिंति मे संजमं करिन्तस्स ।
एएण कारणेणं नमामहं सव्वसाहूणं ॥ १२७ ॥
[१]साहूण नमुक्कारो जीवं० ।
भावेण० ॥ १२८ ॥
साहूण नमुक्कारो धन्नाण० ।
हिअय० ॥ १२९ ॥
साहूणं नमुक्कारो एवं० ।

---

अथवाऽपि द्रव्यभूतास्ते भवन्ति द्रव्यसाधव इति ॥ १२३ ॥
निर्वाणसाधकान् योगान् यस्मात् साधयन्ति साधव ।
समाश्च सर्वभूतेषु तस्मात् ते भावसाधव ॥ १२४ ॥
किं प्रेक्षसे साधूना तपश्च नियमं च सयमगुणं वा ? ।
ततो वन्दसे साधून् एतन् मया पृष्ट कथय ॥ १२५ ॥
विषयसुखनिवृत्तेभ्य विशुध्धचारित्र-नियमयुक्तेभ्य ।
तथ्यगुणसाधकेभ्य सहायकृत्योद्युतेभ्यो नम ॥ १२६ ॥
असहायस्य सहायत्वं कुर्वन्ति मम संयमं कुर्वत ।
एतेन कारणेन नमाम्यहं सर्वसाधून् ॥ १२७ ॥
[१]साधूना नमस्कारो जीवं ।
भावेन ... . ॥ १२८ ॥
साधूना नमस्कारो धन्याना ... ।
हृदयं .. . .. ॥ १२९ ॥
साधूना नमस्कार एवं . ।

---

१ एतदपि पूर्वतुल्यम् ।

जो मरणम्मि० ॥ १३० ॥
साहूण नमुक्कारो सव्व ।
मंगलाणं च सव्वेसि पञ्चमं हवइ मंगलं ॥ १३१ ॥
एसो पञ्च नमुक्कारो सव्वप्पावप्पणासणो ।
मंगलाणं च सव्वेसि पढमं हवइ मगलं ॥ १३२ ॥
न वि संखेवो न वित्थरो संखेवो दुविह सिद्ध–साहूणं ।
वित्थरओ णेगविहो मंचविहो न जुज्जइ तम्हा ॥ १३३ ॥
अरहंताई नियमा साहू, साहू य तेसु भइअव्वा ।
तम्हा पंचविहो खलु हेउनिमित्तं हवइ सिद्धो ॥ १३४ ॥
पुव्वाणुपुव्वि न कमो नेव य पच्छाणुपुव्वि एस भवे ।
सिद्धाईआ पढमा बीआए साहुणो आई ॥ १३५ ॥
अरहंतुवएसेण सिद्धा नज्जान्ति तेग अरिहाई ।
न य कोइ बि परिमाए पणमित्ता पणमइ रण्णो ॥ १३६ ॥
इत्थ य पओअणमिणं कम्मक्खये मगलागमो चेव ।

---

यो मरणे ॥ १३० ॥
साधूना नमस्कार सर्वपाप ... ।
मङ्गलाना च सर्वेषा पञ्चमं भवति मङ्गलम् ॥ १३१ ॥
एष पञ्च नमस्कार सर्वपापप्रणाशन ।
मङ्गलाना च सर्वेषा प्रथमं भवति मङ्गलम् ॥ १३२ ॥
नापि सक्षेपो नापि विस्तर, संक्षेपो द्विविध सिद्ध–साधूनाम् ।
विस्तरतोऽनेकाविध पञ्चविधो न युज्यते तस्मात् ॥ १३३ ॥
अर्हदादयो नियमात् साधव, साधवश्च तेषु भक्तव्या ।
तस्मात् पञ्चविध खलु हेतुनिमित्त भवति सिद्ध ॥ १३४ ॥
पूर्वानुपूर्वी न क्रम नैव च पश्चादनुपूर्वी एष भवेत् ।
सिद्धादिका प्रथमा द्वितीयस्या साधव आदि ॥ १३५ ॥
अर्हदुपदेशेन सिद्धा ज्ञायन्ते तेन अर्हदादि ।
न च कश्चिदपि पर्षद प्रणम्य प्रणमति राजानम् ॥ १३६ ॥
अत्र च प्रयोजनमिदं कर्मक्षये मङ्गलागमश्चैव ।

इहलोअ-पारलोइअ दुविहफलं तत्थ दिट्ठन्ता ॥ १३७ ॥
इह लोगि अत्थ–कामा आरुग्गं अभिरई अ निप्फत्ती ।
सिद्धी अ सग्ग सुकुले पच्चायाई अ परलोए ॥ १३८ ॥
इह लोगम्मि तिदडी सा दिव्वं माउलिगवणमेव ।
परलोइ चडपिगल हुंडिअजक्खो य दिट्ठन्ता ॥ १३९ ॥

॥ नवकारनिज्जुत्ती सम्मत्ता ॥

नंदिमणुओगदारं विहिवदुवग्घाइअं च नाऊणं ।
काऊण पंच मंगलमारंभो होइ सुत्तस्स ॥ १ ॥
अहवा कयपंचनमुक्कारो करेइ सामाइअं ति सोऽभिहिओ ।
सामाइअंगमेव य ज सो सेसं अओ वुच्छं ॥ २ ॥
अक्खलिअसंहिआइ वक्खाणचउक्कए दरिसिअम्मि ।
सुतफासिअनिज्जुत्तिवित्थरत्थो इमो होइ ॥ ३ ॥
करणे भए अ अते सामाइअ सव्वए अवज्जे अ ।
जोगे पच्चक्खाणे जावज्जीवाइ तिविहेण ॥ ४ ॥

---

इहलौकिक-पारलौकिक द्विविधफलं तत्र दृष्टान्ता ॥ १३७ ॥
इहलोके अर्थ–कामौ आरोग्यमभिरतिश्च निष्पत्ति ।
सिद्धिश्च स्वर्ग सुकुले प्रत्यायातिश्च परलोके ॥ १३८ ॥
इहलोके त्रिदण्डी, सा दिव्यं मातुलिङ्गवनमेव ।
परलोके चण्डपिङ्गलो हुण्डिकयक्षश्च दृष्टान्तौ ॥ १३९ ॥

॥ नमस्कारनिर्युक्ति समाप्ता ॥

नन्द्यनुयोगद्वारं विधिवदुपोद्घातितं च ज्ञात्वा ।
कृत्वा पञ्च मङ्गलानि आरम्भो भवति सूत्रस्य ॥ १ ॥
अथवा कृतपञ्चनमस्कार करोति सामायिकमिति सोऽभिहित ।
सामायिकाङ्गमेव च यत्स शेषमतो वक्ष्ये ॥ २ ॥
अस्खलितसंहितादिर्व्याख्यानचतुष्क दर्शिते ।
सूत्रस्पर्शनिर्युक्तिविस्तरार्थोऽयं भवति ॥ ३ ॥
करणं भयं च अन्त सामायिकं सर्वश्चावद्यश्च ।
योग. प्रत्याख्यानं यावज्जीवेन त्रिविधेन ॥ ४ ॥

नामं ठवणा दविए खित्ते काले तहेव भावे अ।
एसो खलु करणस्सओ निक्खेवो छव्विहो होइ ॥ ५ ॥
जाणगभविअइरित्त सन्नानोसन्नओ भवे करण।
सन्ना कडकरणाई नोसन्ना वीसस-पओगे ॥ ६ ॥
वीससकरणमगाई धम्माईण परपच्चया जोगा।
साई चक्खुप्फासिअमब्भाइ अचक्खुमणुमाई ॥ ७ ॥
संवाय-भेअ-तदुभयकरणं इंदाऊहाइ पच्चक्ख।
दुअअणुमाईण पुण छऊमत्थाईण पच्चक्खं ॥ ८ ॥
जीवमजीवे पाओगिअं तु चरिमं कुसंभरागाई।
जीवप्पओगकरणं मूले तह उत्तरगुणे अ ॥ ९ ॥
जं ज निज्जीवाणं कीरइ जीवप्पओगओ तं तं।
वन्नाइ रूवकम्माइ वावि अजीवकरणं तु ॥ १० ॥
जीवप्पओगकरणं दुविह मूलप्पओगकरणं च।
उत्तरप्पओगकरणं पंच सरीराई पढमम्मि ॥ ११ ॥

---

नाम स्थापना द्रव्य क्षेत्रे काले तथैव भावे च।
एष खलु करणस्य तु निक्षेप षड्विधो भवति ॥ ५ ॥
ज्ञभव्यव्यतिरिक्त सञ्ज्ञानोसंज्ञातो भवेत् करणम्।
सञ्ज्ञा कटकरणादि नोसंज्ञातो विस्रसा-प्रयोगौ ॥ ६ ॥
विस्रसाकरणमनादि धर्मादीना परपत्ययाद्योगाद्।
सादि चक्षुस्पृष्टमभ्रादि अचक्षुरण्वादि ॥ ७ ॥
संघात-भेदतदुभयकरणं इन्द्रायुधादि प्रत्यक्षम्।
द्व्यणुकादीना पुन छद्मस्थादीना प्रत्यक्षम् ॥ ८ ॥
जीवाऽजीवौ प्रायोगिक तु चरमं कुसुम्भरागादि।
जीवप्रयोगकरणं मूले तथोत्तरगुणे च ॥ ९ ॥
यद् यद् निर्जीवाना क्रियते जीवप्रयोगतस्तत् तत्।
वर्णादि रूपकर्मादि वापि अजीवकरणं तु ॥ १० ॥
जीवप्रयोगकरणं द्विविध मूलप्रयोगकरण च।
उत्तरप्रयोगकरण पञ्च शरीरादि प्रथमे ॥ ११ ॥

ओरालिआइआइं ओहेणिअरं पओगिजोमहोअ ।
निप्फन्ना निप्पज्जइ आइल्लाण च तं तिण्हं ॥ १२ ॥

मूलप्पओगकरण पञ्चण्ह वि होइ तं सरीराणं ।
तिण्हं पुणाइल्लाण अगो वंगाइकरण तु ॥ १३ ॥

सीसमुरोअर पिट्ठि दो बाहु उरुआ य अट्ठंगा ।
अंगुलमाइ उवंगा अगोवगाइ सेसाइ ॥ १४ ॥

केसाई उवरयणं उरालविउव्विउत्तरकरण ।
ओरालिअे विसेसो कण्णाइ निगट्ठसंठवण ॥ १५ ॥

आइल्लाण तिण्ह सघाओ साडण तदुभय च ।
तेआकम्मे सघाय साडण साडणा वावि ॥ १६ ॥

सघायमेगसमयं तहेव परिसाडण उरालम्मि ।
सघायणपरिसाडो खुड्डागभवं तिसमऊण ॥ १७ ॥

---

औदारिकादीनि ओघेनेतरत् प्रयोगतो यदिह ।
निष्पन्ना निष्पद्यते आद्याना च तत् त्रयाणाम् ॥ १२ ॥

मूलप्रयोगकरण पञ्चानामपि भवति तच् शरीराणाम् ।
त्रयाणा पुनराद्यानामङ्गोपाङ्गादिकरण तु ॥ १३ ॥

शीर्षमुर उदरं पृष्ठं द्वौ बाहू उरुकौ चाष्टाङ्गानि ।
अङ्गुलादि उपाङ्गानि अङ्गोपाङ्गानि शेषाणि ॥ १४ ॥

केशादेरुपरचनमौदारिक–वैक्रियकोत्तरकरणम् ।
औदारिके विशेष कर्णादि विनष्टसंस्थापनम् ॥ १५ ॥

आद्याना त्रयाणा सघात शाटनं तदुभयं च ।
तैजस–कार्मणयो सघात शाटनं शाटना वा पि ॥ १६ ॥

संघात एकसमयं तथैव परिशाटनमौदारिके ।
संघातन–परिशाटौ क्षुद्रकभव त्रिसमयोनम् ॥ १७ ॥

एअ जहन्नमुक्कोसिअ तु पलिअत्तिअ तु समऊणं।
विरहो अन्तरकालो उराले तस्सिमो होइ ॥ १८ ॥
तिसमयहीण खुड्ड होइ भव सव्वबध–साडाणं।
उक्कोस पुव्वकोडी समयो उदही अ तित्तीस ॥ १९ ॥
अतरमेग समय जहन्नमोरालगहणसाडस्स।
सतिसमया उक्कोस तित्तीस सागरा हुन्ति ॥ २० ॥
वेउव्विअसघाओ जहन्नसमयो उ दुसमयुक्कोसो।
साडो पुण समय च्चिअ विउव्वणाए विणिदिट्ठो ॥ २१ ॥
संघायणपरिसाडो जहन्नओ इक्कसमयो होइ।
उक्कोस तित्तीस सागर नामा उ समऊणा ॥ २२ ॥
सव्वग्गहोभयाण साडस्स य अतर विउव्वस्स।
समयोऽन्तमुहुत्त उक्कोस रुक्खकालीअ ॥ २३ ॥
आहारे सघाओ परिसाडो अ समय सम होइ।
उभयं जहन्नमुक्कोसय च अन्तोमुहुत्त तु ॥ २४ ॥

---

एतज्ज जघन्यम्, उत्कृष्ट तु पल्यत्रिक तु समयोनम्।
विरहोऽन्तरकाल औदारिके तस्याऽय भवति ॥ १८ ॥
त्रिसमयहीन क्षुद्र भवति भव सर्वबन्ध–शाटानाम्।
उत्कृष्ट पूर्वकोटि समय उदधयश्च त्रयस्त्रिशत् ॥ १९ ॥
अन्तरमेकं समयं जघन्यमौदारिकग्रहण–शाटयो।
सत्रिसमया उत्कृष्टं त्रयस्त्रिशत् सागरा भवन्ति ॥ २० ॥
वैकुर्विकसंघात जघन्यसमयस्तु द्विसमयम्, उत्कृष्ट।
शाट पुन समयमेव विकुर्वणाया विनिदिष्ट ॥ २१ ॥
संघातन–परिशाटौ जघन्यत एकसमय भवति।
उत्कृष्ट त्रयस्त्रिशत् सागरा नाम तु समयोना ॥ २२ ॥
सर्वग्रहोभययो शाटस्य चान्तरं वैक्रियस्य।
समयोऽन्तमुहूर्तमुत्कृष्टं वृक्षकालिकम् ॥ २३ ॥
आहारके सघात परिशाटश्च समय सम भवति।
उभय जघन्यमुत्कृष्ट च अन्तर्मुहूर्त तु ॥ २४ ॥

---

वृक्षकालेन अनन्तेन निर्वृतमित्यर्थ•।

बंधण-साडुभयाणं जहन्नमन्तोमुहुत्तमन्तरण ।
उक्कोसेण अवड्ढ पुग्गलपरिअट्ट देसूणं ॥ २५ ॥
तेयाकम्माण पुण सताणाऽणाइओ न सघायो ।
भव्वाण हुज्ज साडो सेलेसीचरिमसमयम्मि ॥ २६ ॥
उभयमणाइनिहण सत भव्वाण हुज्ज केसि च ।
अन्तरमणाइभावा अच्चन्तविओगओ तेसि ॥ २७ ॥
अहवा सघाओ साडण च उभय तहोभयनिसेहो ।
पड-सख सगड-थूणा जीवपओगे जहासखं ॥ २८ ॥
खित्तस्स नत्थिकरण आगासं ज अकित्तिमो भावो ।
वजणपरिआवन्न जहा वि पुण उच्छुकरणाई ॥ २९ ॥
काले वि नत्थि करण तहा वि पुण वजणप्पमाणेणं ।
बव-बालवाइकरणेहि णेगहा होइ ववहारो ॥ ३० ॥
ज वत्तणाइरूवो कालो दव्वाण चेव पज्जाओ ।
तो तेण तस्स तम्मि वि न विरुद्ध सव्वहा करण ॥ ३१ ॥

---

बन्धन-शाटोभयेषा जघन्यमन्तर्मुहूर्तमन्तरकरणम् ।
उत्कृष्टेनापार्ध पुद्गलपरावर्तं देशोनम् ॥ २५ ॥
तैजस-कार्मणयो पुन सताना अनादितो न सघात ।
भव्याना भवेत् शाट शैलेशीचरमसमये ॥ २६ ॥
उभयमनादिनिधनं सान्तं भव्याना भवेत् केषा चित् ।
अन्तरमनादिभावादत्यन्तवियोगतस्तेषाम ॥ २७ ॥
अथवा संघात. शाटन चोभयं तथोभयनिषेध ।
पट-शङ्ख-शकट-स्थूणा जीवप्रयोगे यथासङ्ख्यम् ॥ २८ ॥
क्षेत्रस्य नास्ति करणं आकाशं यदकृत्रिमो भाव ।
व्यञ्जनपर्यायापन्नं यथाऽपि पुनरिक्षुकरणादि ॥ २९ ॥
कालेऽपि नास्ति करणं तथापि पुनर्व्यञ्जनप्रमाणेन ।
बव-बालवादिकरणैरनेकधा भवति व्यवहार ॥ ३० ॥
यद् वर्तनादिरूप कालो द्रव्याणा चैव पर्याय ।
ततस्तेन तस्य तस्मिन्नपि न विरुद्धं सर्वथा करणम् ॥ ३१ ॥

अहवेह [1]कालकरणं बवाइ जोइसिअगइविसेसेण।
सत्तविहं तत्थ चर चउव्विहं थिरं समक्खायं ॥ ३२ ॥
बवं च बालवं चेव कोलव थीविलोअणं।
गराइ वणिजं चेव विट्ठी हवइ सत्तमा ॥ ३३ ॥
सउणि चउप्पय नाग किथुग्घ करणं थिरं चउहा।
बहुले चउद्दसी रत्ती सउणी सेसं तिअं कमसो ॥ ३४ ॥
पक्खातिहीओ दुगुणिआ दुरूवहीणा य सुक्कपक्खम्मि।
सत्तहिए देवसिअ त चिंअ रूवाहिअं रत्तिं ॥ ३५ ॥
किण्हनिसि तइअ-दसमी-सत्तमी-चाउद्दसीसु अह विट्ठी।
सुक्कचउत्थिक्कारासिनिसि अट्ठमि पुण्णिमाइ दिवा ॥ ३६ ॥
सुद्धस्स पडिवइनिसि पचमिदिणि अ अट्ठमीइ [2]राइम्मि।
दिवसस्स बारसी पुण्णिमाइ रत्तिं बव होइ ॥ ३७ ॥
बहुलस्स चउत्थीए दिवा य तह [3]सत्तमीअ राइम्मि।
इक्कारसीइ दिवा बवकरण होइ नायव्व ॥ ३८ ॥

---

अथवेह कालकरणं बवादि ज्योतिषिकगतिविशेषेण।
सप्तविधं तत्र चर चतुर्विधं स्थिर समाख्यातम् ॥ ३२ ॥
बवं च बालव चैव कौलवं स्त्रीविलोकनम्।
करादि वाणिज्यं चैव विष्टिर्भवति सप्तमी ॥ ३३ ॥
शकुनिश्चतुष्पद नागं किंस्तुघ्नं करणं स्थिर चतुर्धा।
बहुले चतुर्दशी रात्री शकुनि शेष त्रिक क्रमश ॥ ३४ ॥
पक्षतिथयो द्विगुणिता द्विरूपहीनाश्च शुक्लपक्षे।
सप्ताधिके दैवसिकं तदेव रूपाधिक रात्रौ ॥ ३५ ॥
कृष्णनिशि तृतीया-दशमी-सप्तमी–चतुर्दशीष्वथ विष्टि।
शुक्लचतुर्थ्ये–कादशीनिशि अष्टम्या पूर्णिमाया दिवा ॥ ३६ ॥
शुद्धस्य प्रतिपन्निशि पञ्चमीदिने चाष्टम्या रात्रौ।
दिवसस्य द्वादशी पूर्णिमाया रात्रौ बवं भवति ॥ ३७ ॥
बहुलस्य चतुर्थ्यां दिवा च तथा सप्तमीरात्रौ।
एकादश्या दिवा बवकरण भवति ज्ञातव्यम् ॥ ३८ ॥

---

१ क, कालकरणेण। २, क, राईसु। ३ क, सत्तमीइ।

जीवमजीवे भावे अजीवकरणं तत्थ वण्णाई ।
जीवकरणं तु दुविह सुअकरण नोसुअकरणं ॥ ३९ ॥
बद्धमबद्धं तु सुअ बद्ध तु दुवालसगनिद्दिट्ठ ।
तव्विवरीअमबद्ध निसीहमनीसिहबद्ध तु ॥ ४० ॥
भूएऽपरिणइविगए सद्दकरणं तहेव न निसीहं ।
पच्छन्नं तु निसीह निसीहनामं जहज्झयण ॥ ४१ ॥
अग्गेअणीअम्मि जहा दीवायणु जत्थ एगु तत्थ सयं ।
जत्थ सयं तत्थेगो हम्मइ वा भुजइ वावि ॥ ४२ ॥
एव बद्धमबद्ध आहसाण भवन्ति पच सया ।
जह एगा मरुदेवी अच्चतं थावरा सिद्धा ॥ ४३ ॥
नोसुअकरण दुविह गुणकरण तह य जुजणाकरण ।
गुणकरणं पुण दुविह तवकरणे सजमे य तहा ॥ ४४ ॥
जुंजणकरण तिविहं मण--वय--काए य मणसि सच्चाइ ।
सट्ठाणि तेसि भेओ चउ चउहा सत्तहा चेव ॥ ४५ ॥

---

जीवाजीवयोर्भावेऽजीवकरणं तत्र वर्णादि ।
जीवकरणं तु द्विविधं श्रुतकरण नोश्रुतकरणं ॥ ३९ ॥
बद्धमबद्धं तु श्रुतं बद्धं तु द्वादशाङ्गनिर्दिष्टम् ।
तद्विपरीतमबद्धं निशीथमनिशीथबद्ध तु ॥ ४० ॥
भूतमपरिणतं विगतं शब्दकरण तथैव न निशीथम् ।
प्रच्छन्नं तु निशीथं निशीथनाम यथाध्ययनम् ॥ ४१ ॥
अग्रायणीये यथा द्वीपायन यत्रैकस्तत्र शतम् ।
यत्र शतं तत्रैको गच्छति वा भुङ्क्ते वापि ॥ ४२ ॥
एवं बद्धमबद्धमादेशाना भवन्ति पञ्च शतानि ।
यथैका मरुदेवी अत्यन्त स्थावरा सिद्धा ॥ ४३ ॥
नोश्रुतकरणं द्विविधं गुणकरण तथा च योजनाकरणम् ।
गुणकरणं पुनर्द्विविधं तप करणं संयमश्च तथा ॥ ४४ ॥
योजनकरणं त्रिविधं मनो-वच-काये च मनसि सत्यादि ।
स्वस्थाने तेषा भेदश्चतुर्धा चतुर्धा सप्तधा चैव ॥ ४५ ॥

भावे सुअसद्दकरणे अहिगारो इत्थ होइ नायव्वो ।
नोसुअकरणे गुणजुंजणे अ जहसभव होइ ॥ ४६ ॥
कयाकय केण कय केसु अ दव्वेसु कीरइ वावि ।
काहेव कारओ नयओ करणं कइविह कह² ॥ ४७ ॥
उपन्नाणुप्पन्न कयाकयं इत्थ जह नमुक्कारो ।
केण ति अत्थओ त जिणेहिं सुत्त गणहरेहि ॥ ४८ ॥
तं केसु कीरइ तत्थ नेगमो भणइ इह द्व्वेसु ।
सेसाण सव्वदव्वेसु पज्जवेसुं न सव्वेसु ॥ ४९ ॥
काहुद्दिट्ठे णेगम उवट्ठिए संगहो अ ववहारो ।
उज्जुसुओ अक्कमन्ते सद्द समत्तम्मि उवउत्तो ॥ ५० ॥
आलोअणा य विणए खित्त दिसाभिग्गहे अ काले अ ।
रिक्ख गुणसपया वि अ अभिवाहारे अ अट्ठमए ॥ ५१ ॥
पवज्जाए ज जुग्ग तावइआलोअणा गिहत्थेसु¹ ।
उवसपयाइ साहूसु सुत्थे अत्थे तदुभये ॥ ५२ ॥

---

भावे श्रुतशब्दकरणेऽधिकारोऽत्र भवति ज्ञातव्य ।
नोश्रुतकरणे गुणयोजने च यथासंभवं भवति ॥ ४६ ॥
कृताकृतं केन कृत केषु च द्रव्येषु क्रियते वाऽपि ।
कदैव कारको *नयत करणं कतिविधं कथम्² ॥ ४७ ॥
उत्पन्नाऽनुत्पन्न कृताकृतमत्र यथा नमस्कार ।
केनेति अर्थतस्तद् जिनै सूत्र गणधरै ॥ ४८ ॥
तत् केषु क्रियते तत्र नैगमो भणति इह द्रव्येषु ।
शेषाणा सर्वद्रव्येषु पर्यवेषु न सर्वेषु ॥ ४९ ॥
कदा उद्दिष्टे नैगम, उपस्थिते सग्रहश्च व्यवहार ।
ऋजुसूत्र आक्रममाण, शब्द समाप्ते उपयुक्त ॥ ५० ॥
आलोचना च विनय क्षेत्र दिगभिग्रहश्च कालश्च ।
ऋक्ष गुणसपदपि च अभिव्याहारश्चाष्टमके ॥ ५१ ॥
प्रव्रज्याया यद् योग्य तावत्यालोचना गृहस्थेषु ।
उपसंपदि साधुषु सूत्रेऽर्थे तदुभये ॥ ५२ ॥

---

१ ख, निग्गथेसु ।
* नयविचारणयेति तत्त्वम् ।

आलोइए विणीअस्स दिज्जए त पसत्थखित्तम्मि ।
अभिगिज्झ दो दिसाओ चरन्ति ज जहा कमसो ॥ ५३ ॥
अणुरत्तो भत्तिगओ अ मुइअणुअत्तओ विसेसण्णू ।
उज्जुन्तमपरितन्तो इच्छिअमत्थ लहइ साहू ॥ ५४ ॥
उच्छुवणे सालिवणे पउमसरे कुसुमिअे व वणसडे ।
गम्भीरसाणुणाए पयाहिणजले जिणघरे वा ॥ ५५ ॥
दिज्ज न उ भग्गज्झामिअमसाणसुन्नामणुन्नगेहेसु ।
छारंगारक्खयारामिज्झइदव्वदुट्ठेसु ॥ ५६ ॥
पुव्वाभिमुहो उत्तरमुहो व दिज्जाऽहवा पडिच्छिज्जा ।
जाए जिणादओ वा दिसाइ जिणचेइआइं च ॥ ५७ ॥
पडिकुट्ठादिणे वज्जिअ रिक्खेसु अ मिगसिराइभणिअेसुं ।
पियधम्माईगुणसपयासु त होइ दायव्व ॥ ५८ ॥
चाउद्दसि पन्नरसिं वज्जिज्जा अट्ठमिं च नवमिं च ।
छट्ठिं च चउत्थिं बारसिं च दुण्ह पि पक्खाण ॥ ५९ ॥

---

आलोचिते विनीतस्य दीयते तत् प्रशस्तक्षेत्रे ।
अभिगृह्य द्वे दिशौ चरन्ति यद् यथा क्रमश ॥ ५३ ॥
अनुरक्तो भक्तिगतश्च मुदितोऽनुवर्तको विशेषज्ञ ।
उद्युक्तोऽपरितान्त इच्छितमर्थं लभते साधु ॥ ५४ ॥
इक्षुवणे शालिवने पद्मसरसि कुसुमिते वा वनखण्डे ।
गम्भीरे सानुनादे प्रदक्षिणजले जिनगृहे वा ॥ ५५ ॥
दद्याद् न तु भग्नध्यामितश्मशानशून्यामनोज्ञगेहेषु ।
क्षाराङ्गारावस्करामेध्यादिद्रव्यदुष्टेषु ॥ ५६ ॥
पूर्वाभिमुख उत्तरमुखो वा दद्यादथवा प्रतीच्छेत् ।
यस्या जिनादयो वा दिशि जिनचैत्यानि च ॥ ५७ ॥
प्रतिकुष्टदिनान् वर्जयेत्, ऋक्षेषु च मृगशिरआदिभणितेषु ।
प्रियधर्मादिगुणसम्पत्सु तद् भवति दातव्यम् ॥ ५८ ॥
चतुर्दशीं पञ्चदशीं वर्जयेदष्टमीं च नवमीं च ।
षष्ठीं च चतुर्थीं द्वादशीं च द्वयोरपि पक्षयो ॥ ५९ ॥

मिगसिर अद्दा पुस्से तिण्णि अ पुव्वा य मूलमस्सेसा ।
हत्थो चित्ता य तहा दस वुड्ढिकराइ नाणस्स ॥ ६० ॥
सझागयं रविगय विड्डेरं सग्गह विलम्ब च ।
राहुहय गहभिन्न च वज्जए सत्त नक्खत्ते ॥ ६१ ॥
सझागयम्मि कलहो होइ कुभत्त विलम्बिनक्खत्ते ।
वड्डेरे परिवज्जिओ आइच्चगहे अनिव्वाण ॥ ६२ ॥
ज सगहम्मि पि कीरइ नक्खत्ते तत्थ विग्गहो होइ ।
राहुहए वि अ मरणं गहभिन्ने सोणिउग्गालो ॥ ६३ ॥
पियधम्मो दढधम्मो सविग्गो अवज्जभीरु असढो अ ।
खतो दतो गुत्तो थिरव्वय जिइदिओ उज्जू ॥ ६४ ॥
अभिवाहारो कालिअसुअस्स सुत्तत्थतदुभएण ति ।
दव्वगुणपज्जवेहि अ दिट्ठीवायम्मि बोधव्वो ॥ ६५ ॥
उद्देस समुद्देसो वायणमणुजाणणं च आयरिए ।
सीसमि उद्दिसिज्जतमाइ एअ तु ज कइहा ॥ ६६ ॥

---

मृगशिर आर्द्रा पुष्य त्रीणि च पूर्वा च मूलमश्लेषा ।
हस्तश्चित्रा च तथा दश वृद्धिकराणि ज्ञानस्य ॥ ६० ॥
संध्यागतं रविगत विड्डेरं सग्रहं विलम्ब च ।
राहुहत ग्रहभिन्न च वर्जयेत् सप्त नक्षत्राणि ॥ ६१ ॥
संध्यागते कलहो भवति कुभक्तो विलम्बनक्षत्रे ।
विड्डेरे परिवर्जित आदित्यग्रहेऽनिर्वाणम् ॥ ६२ ॥
यत् सग्रहेऽपि क्रियते नक्षत्रे तत्र विग्रहो भवति ।
राहुहतेऽपि च मरण ग्रहभिन्ने शोणितोद्गार ॥ ६३ ॥
प्रियधर्मो दृढधर्म सविग्नोऽवद्यभीरुरशठश्च ।
क्षान्तो दान्तो गुप्त स्थिरव्रतो जितेन्द्रिय ऋजु ॥ ६४ ॥
अभिव्याहार· कालिकश्रुतस्य सूत्रार्थतदुभयेनेति ।
द्रव्यगुणपर्यवैश्च दृष्टिवादे बोद्धव्य ॥ ६५ ॥
उद्देश समुद्देश वाचनमनुज्ञानं चाचार्ये ।
शिष्ये उद्दिश्यमानमादि एतत् तु यत् कतिधा ॥ ६६ ॥

कह सामाइअलंभो तस्सव्ववाघाई देसवाघाई ।
देसवाघाई फड्डग अणंतवुड्ढि विसुद्धस्स ॥ ६७ ॥
एवं ककारलम्भो सेसाण वि एवमेव कमलंभो ।
एअं तु भावकरणं करणे य भए य जं भणिअं ॥ ६८ ॥
होइ भयंतो भवअंतगो य रयणा भयस्स छब्भेआ ।
सव्वम्मि वण्णिएऽणुक्कमेण अते वि छब्भेआ ॥ ६९ ॥
एव सव्वम्मि वि वण्णिअम्मि इत्थ तुं होइ अहिगारो ।
सत्तभयविप्पमुक्के तहा भवते मयन्ते य ॥ ७० ॥
साम समं च सम्मं इगम्मि इ सामाइअस्स एगट्ठा ।
नामं ठवणा दविए भावम्मि य तस्स निक्खेवो ॥ ७१ ॥
महुरपरिणाम साम सम तुला सम्म खीरखडजुई ।
दोरे हारस्स चिइ इगमेआइ तु दव्वम्मि ॥ ७२ ॥
आयोवमाए परदुक्खमकरण रागदोसमज्झत्थ ।
नाणाइ तिग तस्सायपोअण भावसामाई ॥ ७३ ॥

---

कथं सामायिकलाभ तत्सर्वव्याघातीनि देशव्याघातीनि ।
देशव्याघातीनि स्पर्धकानि अनन्तवृद्धिर्विशुद्धस्य ॥ ६७ ॥
एवं ककारलाभ शेषाणामपि एवमेव क्रमलाभ
एतत् तु भावकरणं करणे च भये च यद् भणितम् ॥ ६८ ॥
भवति भयान्तो भवान्तकश्च रचना भयस्य षड्भेदा ।
सर्वस्मिन् वर्णितेऽनुक्रमेणान्तेऽपि षड्भेदा ॥ ६९ ॥
एव सर्वस्मिन्नपि वर्णितेऽत्र तु भवति अधिकार ।
सप्तभयविप्रमुक्तास्तथा भवान्ता भयान्ताश्च ॥ ७० ॥
साम समं सम्यक् एकस्मिन्नपि सामायिकस्य एकार्था ।
नाम स्थापना द्रव्ये भावे च तस्य निक्षेप ॥ ७१ ॥
मधुरपरिणाम साम समं तुला सम्यक् क्षीरखण्डयुति ।
दवरके हारस्य चितिरेकमेतानि तु द्रव्ये ॥ ७२ ॥
आत्मोपमया परदु खाकरण राग-द्वेषमाध्यस्थ्यम् ।
ज्ञानादित्रिकं तस्यात्मप्रोतनं भावसामादि ॥ ७३ ॥

समया समत्त पसत्थ संति सिव हिअ सुहमणिंदं च ।
अदुगछिअमगरहिअ अणवज्जं इमे वि एगट्ठा ॥ ७४ ॥
को कारओ करिन्तो कि कम्म ज तु कीरइ तेग ।
किं कारय-करणाण य अन्नमणन्न च अक्खेवो ॥ ७५ ॥
आया हु कारओ मे सामाइअ कम्म करणमाया य ।
परिणामे सइ आया सामाइअमेव उ पसिद्धी ॥ ७६ ॥
एगंते जह मुट्ठि करेइ अत्थतरे घडाईणि ।
दव्वत्थंतरभावे गुणस्स कि केण सबद्ध ॥ ७८ ॥
नामं ठवणा दविए आएसे निरवसेसे चेव ।
तह सव्वधत्त सव्व च भावसव्वं च सत्तमय ॥ ७८ ॥
दविए चउरो भंगा सव्वमसव्वे य दव्वदेसे य ।
आएस सव्वगामे नीसेसे सव्वगं दुविह ॥ ७९ ॥
अणमिसिणो सव्वसुरा सव्वापरिसेससव्वग एअ ।
तद्देसापरिसेस सव्वे काला जहा असुरा ॥ ८० ॥

---

समता सम्यक्त्व प्रशस्त शान्ति शिवं हितं सुखमानिन्दं च ।
अजुगुप्सितमगर्हितमनवद्यमिमेऽपि एकार्थाः ॥ ७४ ॥
क कारक कुर्वन् कि कर्म यत्तु क्रियते तेन ।
किं कारक-करणयोश्चान्यत्वमनन्यत्वं चाक्षेप ॥ ७५ ॥
आत्मा खलु कारको मे सामायिकं कर्म करणमात्मा च ।
परिणामे सति आत्मा सामायिकमेव तु प्रसिद्धि ॥ ७६ ॥
एकान्ते यथा मुष्टिं करोति अर्थान्तरे घटादीनि ।
द्रव्यादर्थान्तरभावे गुणस्य किं केन सम्बद्धम् ॥ ७७ ॥
नाम स्थापना द्रव्ये आदेशे निरवशेषे चैव ।
तथा सर्वहितसर्वं च भावसर्वं च सप्तमकम् ॥ ७८ ॥
द्रव्ये चत्वारो भङ्गा सर्वमसर्वं च द्रव्यदेशश्च ।
आदेश सर्वग्राम॰ नि शेषे सर्वकं द्विविधम् ॥ ७९ ॥
अनिमिषिण सर्वसुरा सर्वापरिशेषसर्वकमेतत् ।
तद्देशापरिशेषं सर्वे काला यथा असुरा ॥ ८० ॥

सा भवइ सव्वधत्ता दुपडोयारा जिआ य अजिआ अ ।
दव्वे सव्वघडाई सव्वधत्ता पुणो कसिण ॥ ८१ ॥
भावे सव्वोदइओ उदयलक्खणो जहेव तह सेसा ।
इत्थ उ खउवसमिए अहिगारो सेससव्वे य ॥ ८२ ॥
कम्ममवज्जं ज गरहिअ ति कोहाइणो व चत्तारि ।
सह तेण जोग जोगो पच्चक्खाण हवइ तस्स ॥ ८३ ॥
दव्वे मणवयकाए जोगा दव्वा दुहा उ भावम्मि ।
जोगो सम्मत्ताई पसत्थ इअरो उ विवरीओ ॥ ८४ ॥
नाम ठवणा दविए खित्तमइच्छा य भावओ त च ।
नामाभिहाणं सुत्त ठवणागारक्खानिक्खेवो ॥ ८५ ॥
दव्वम्मि निण्हगाइ निव्विसयाई अ हुति खित्तम्मि ।
भिक्खाइणमदाणे अइच्छ भावे पुणो दुविह ॥ ८६ ॥
सुअ-नोसुअस्स अ दुविह पुव्वमपुव्वं तु होइ नायव्वं ।
नोसुअपच्चक्खाण मूलगुणे तह उत्तरगुणे य ॥ ८७ ॥

---

सा भवति सर्ववत्ता[1] द्विप्रकारा जीवाश्चाजीवाश्च ।
द्रव्ये सर्वघटादि सर्वधत्ता पुन कृत्स्नम् ॥ ८१ ॥
भावे सर्वौदयिक उदयलक्षणो यथैव तथा शेषा ।
अत्र तु क्षायोपशमिकेऽधिकार शेषसर्वे च ॥ ८२ ॥
कर्मावद्यं यद् गर्हितामिति क्रोधादयो वा चत्वार ।
सह तेन योगो योग प्रत्याख्यानं भवति तस्य ॥ ८३ ॥
द्रव्ये मनो-वाक्काये योगा द्रव्याणि द्विधा तु भावे ।
योग सम्यक्त्वादि प्रशस्त इतरस्तु विपरीत ॥ ८४ ॥
नाम स्थापना द्रव्यं क्षेत्रमदित्सा च भावतस्तच ।
नामाभिधानं सूत्रं स्थापनाऽऽकाराख्यानिक्षेप ॥ ८५ ॥
द्रव्ये निह्नवादि निर्विषयादयश्च भवन्ति क्षेत्रे ।
भिक्षादीनामदाने अदित्सा भावे पुनर्द्विविधम् ॥ ८६ ॥
श्रुत-नोश्रुतस्य च द्विविधं पूर्वमपूर्वं तु भवति ज्ञातव्यम् ।
नोश्रुतप्रत्याख्यानं मूलगुणे तथोत्तरगुणे च ॥ ८७ ॥

---

१ सर्वं जीवाऽजीवाख्यं वस्तु निहित यस्या सा सर्वधत्ता, देशीशब्दोऽयम्

जावदवधारणम्मि जीवणमवि पाणधारणे भणिअं ।
आ पाणधारणाओ पावनिवत्ती इह अत्थो ॥ ८८ ॥
नाम ठवणा दविए ओहे भव तब्भवे य भोगे य ।
संजम जस कित्ती जीविअं च त भण्णइ दसहा ॥ ८९ ॥
दव्वे सचित्ताई आऊ य सद्व्वया भवे ओहे ।
नेरइआईण भवे तब्भव तत्थेव उप्पत्ती ॥ ९० ॥
भोगम्मि चक्किमाइ सुजमजीव तु संजयजणस्स ।
जसकित्तीइ भगवओ संजमनरजीवअहिगारो ॥ ९१ ॥
सीआलं भंगसय तिविह तिविहेण समिईहिं गुत्तीहिं ।
सुत्तप्फासिअनिज्जुत्तिवित्थरत्थो गओ एवं ॥ ९२ ॥
सामाइअ करेमि पच्चक्खामि पाडिक्कमामि त्ति ।
पच्चुप्पन्नमणागयअईअकालाण गहणं तु ॥ ९३ ॥
तिविहेण तु न ज्जुत्त पडिवयविहिणा समाहिअं जेण ।
अत्थविगप्पणयाए गुणभावण यत्ति को दोसो ? ९४ ॥

---

यावदवधारणे जीवनमपि प्राणधारणे भणितम् ।
आ प्राणधारणात् पापनिवृत्तिरिहार्थ ॥ ८८ ॥
नाम स्थापना द्रव्यमोघो भवस्तद्भवश्च भोगश्च ।
संयम यश कीर्तिर्जीवितं च तद् भण्यते दशधा ॥ ८९ ॥
द्रव्ये सचित्तादिरायुश्च सद्रव्यता भवेदोघे ।
नैरयिकादीना भवे तद्भवस्तत्रैव उत्पत्ति ॥ ९० ॥
भोगे चक्रवर्त्यादि संयमजीवस्तु संयतजनस्य ।
यश कीर्त्यां भगवत संयमनरजीवाधिकार ॥ ९१ ॥
सप्तचत्वारिंशत् भङ्गशत त्रिविध त्रिविधेन समितिभिर्गुप्तिभि॰
सूत्रस्पर्शितनिर्युक्तिविस्तरार्थो गत एवम् ॥ ९२ ॥
सामायिकं करोमि प्रत्याख्यामि प्रतिक्रमामीति ।
प्रत्युत्पन्नमनागतोऽतीतकालाना ग्रहणं तु ॥ ९३ ॥
त्रिविधेन तु न युक्त प्रतिपदविधिना समाहितं येन ।
अर्थविकल्पनतया गुणभावना चेति को दोष ? ॥ ९४ ॥

दव्वम्मि निण्णगाइ कुलालमिच्छात्ति तत्थुदाहरणं ।
भावम्मि तदुवउत्तो मिगावई तत्थुदाहरणं ॥ ९५ ॥
स चरित्तपत्थयावो निंदा तिए चउक्कनिक्खेवो ।
दव्वे चित्तगरसुआ भावे सुबहूदारणा ॥ ९६ ॥
गरिहा वि तहाजाइयमेव नवरं परप्पगासणया ।
दव्वे पुण मरु नाय भावे सुबहु उदाहरणा ॥ ९७ ॥
दव्वविउस्सग्गे खलु पसन्नचन्दो भवे उदाहरणं ।
पडियागयसवेगो भावम्मि वि होइ सो चेव ॥ ९८ ॥
सावज्जजोगविरओ तिविहं तिविहेण वोसरिअपावो ।
सामाइअमाईए एसो अणुगमो परिसमत्तो ॥ ९९ ॥
विज्जाचरणनएसु सेस समोआरणं च कायव्व ।
सामाइअनिज्जुत्ती सुभासिअत्था परिसमत्ता ॥ १०० ॥
नायम्मि गिण्हिअव्वे अ गिण्हिअव्वम्मि चेव अत्थम्मि ।
जइअव्वमेव इय जो उवएसो से णओ नाम ॥ १०१ ॥

---

द्रव्ये निह्नवादि कुलालमिथ्येति तत्रोदाहरणम् ।
भावे तदुपयुक्तो मृगावती तत्रोदाहरणम् ॥ ९५ ॥
स चारित्रपश्चातापो निन्दा तस्या चतुष्कनिक्षेप ।
द्रव्ये चित्रकरसुता भावे सुबहून्युदाहरणानि ॥ ९६ ॥
गर्हाऽपि तथाजातीयैव नवरं परप्रकाशनता ।
द्रव्ये पुनर्मरुज्ञातं भावे सुबहून्युदाहरणानि ॥ ९७ ॥
द्रव्यव्युत्सर्गे खलु प्रसन्नचन्द्रो भवेदुदाहरणम् ।
पतितागतसंवेगो भावेऽपि भवति स एव ॥ ९८ ॥
सावद्ययोगविरतस्त्रिविधं त्रिविधेन व्युत्सृष्टपाप ।
सामायिकादिके एष अनुगम परिसमाप्त ॥ ९९ ॥
विद्याचरणनययो शेषं समवतरणं च कर्तव्यम् ।
सामायिकनिर्युक्ति सुभाषितार्था परिसमाप्ता ॥ १०० ॥
ज्ञाते ग्रहीतव्ये च ग्रहीतव्ये चैवार्थे ।
यतितव्यमेव इति य उपदेश स नयो नाम ॥ १०१ ॥

सव्वेसिं पि नयाणं बहुविहवत्तव्वय निसामित्ता ।
तं सव्वनयविसुद्ध ज चरणगुणट्ठिओ साहू ॥ १०२ ॥

॥ सामाइअनिज्जूत्ती सम्मत्ता ॥

चउवीसगत्थयस्स उ निक्खेवो होइ नामनिप्पन्नो ।
चउवीसगस्स छक्को त्थयस्स उ चउक्कओ होइ ॥ १ ॥

नामं ठवणा दविए खित्ते काले तहेव भावे य ।
चउवीसगस्स एसो निंक्खेवो छव्विहो होइ ॥ २ ॥

नामं ठवणा दविए भावे य थयस्स होइ निक्खेवो ।
दव्वत्थओ पुप्फाई सन्तगुणाकित्तणा भावे ॥ ३ ॥

दव्वत्थओ भावत्थओ दवत्थओ बहुगुणात्ति बुद्धि सिआ ।
अनिउणमइवयणमिणं छज्जीवहिअं जिणा बिन्ति ॥ ४ ॥

छज्जीवकायसजम दव्वत्थएसो विरुज्झइ कसिणो ।
तो कसिणसजमविऊ पुप्फाइअ न इच्छन्ति ॥ ५ ॥

---

सर्वेषामपि नयाना बहुविधवक्तव्यता निशम्य ।
तत् सर्वनयविशुद्ध यत् चरणगुणस्थित साधु ॥ १०२ ॥

॥ सामायिकनिर्युक्ति. समाप्ता ॥

चतुर्विंशतिस्तवस्य तु निक्षेपो भवति नामनिष्पन्न ।
चतुर्विंशते षट्क स्तवस्य तु चतुष्को भवति ॥ १ ॥

नाम स्थापना द्रव्यं क्षेत्रं कालस्तथैव भावश्च ।
चतुर्विंशतेरेष निक्षेप षड्विधो भवति ॥ २ ॥

नाम स्थापना द्रव्य भावश्च स्तवस्य भवति निक्षेप ।
द्रव्यस्तव पुष्पादि सद्गुणकीर्तना भावे ॥ ३ ॥

द्रव्यस्तवो भावस्तवो द्रव्यस्तवो बहुगुण इति बुद्धि स्यात् ।
अनिपुणमतिवचनमिदं षड्जीवहित जिना ब्रुवते ॥ ४ ॥

षड्जीवकायसंयमो द्रव्यस्तवे एष विरुध्यते कृत्स्न ।
तत कृत्स्नसंयमविद पुष्पादिकं नेच्छन्ति ॥ ५ ॥

अकसिणपवत्तयाण विरयाविरयाणे एस खलु जुत्तो¹।
संसारपयणुकरणो दव्वत्थए कूवदिट्ठन्तो ॥ ६ ॥
नाम ठवणा दविए खिते काले भवे य भावे य ।
पज्जवलोगे य तहा अट्ठविहो लोगनिक्खेवो ॥ ७ ॥
जीवमजीवे रुवमरुवी सप्पएसमप्पएसे य ।
जाणाहि दव्वलोग निच्चमनिच्च च ज दव्व ॥ ८ ॥
गइसिद्धा भविआया अभविअ पुग्गल, अणागयद्धा य ।
तीअद्ध तिन्नि काया जीवाजीवठिई चउहा ॥ ९ ॥
आगासस्स पाएसा उड्ढे च अहे अ तिरिअ लोए अ ।
जाणाहि खित्तलोगं अणताजिणदेसिअ सम्म ॥ १० ॥
समयावली अ मुहुत्ता दिवसमहोरत्त पक्ख मासा य ।
सवच्छर जुग पलिआ सागर ओसप्पिणि परियट्टा ॥ ११ ॥
नेरइअदेवमणुआ तिरिक्खजोणीगया य जे सत्ता ।
तम्मि भवे वट्टन्ता भवलोगं तं विआणाहि ॥ १२ ॥

---

अकृत्स्नप्रवर्तकाना ¹विरताऽविरतानामेष खलु युक्त
संसारप्रतनुकरणो द्रव्यस्तवे कूपदृष्टान्त ॥ ६ ॥
नाम स्थापना द्रव्य क्षेत्रं कालो भवश्च भावश्च ।
पर्यवलोकश्च तथाऽष्टविधो लोकनिक्षेप ॥ ७ ॥
जीवोऽजीवो रूप्यऽरूपी सप्रदेशोऽप्रदेशश्च ।
जानीहि द्रव्यलोकं नित्यमनित्यं च यद् द्रव्यम् ॥ ८ ॥
गतिसिद्धो भव्यात्माऽभव्य पुद्गलोऽनागताद्धा च ।
अतीताद्धा त्रय काया जीवाऽजीवस्थितिश्चतुर्धा ॥ ९ ।
आकाशस्य प्रदेशा ऊर्ध्वं चाधश्च तीर्यग्लोके च ।
जानीहि क्षेत्रलोकमनन्तजिनदेशित सम्यक् ॥ १० ॥
समयावल्यश्च मुहूर्ता दिवसोऽहोरात्र पक्षा मासाश्च ।
सवत्सरं युग पल्यानि सागरा अवसर्पिणी परावर्ता ॥ ११ ॥
नैरयिक–देव–मनुजा तीर्यग्योनिगताश्च ये सत्त्वा ।
तस्मिन् भवे वर्तमाना भवलोक तं विजानीहि ॥ १२ ॥

---

१ विरताऽविरताना श्रावकाणाम् ।

उदइओ उवसमिए खइए अ तहा खओवसमिए अ।
परिणामि सन्निवाए छव्विहो भावलोगो य ॥ १३ ॥
तिव्वो रागो य दोसो य उइन्नो जस्स जन्तुणो।
जाणाहि भावलोग अणन्तजिणदेसिअ सम्म ॥ १४ ॥
दव्वगुणखित्तपज्जवभवाणुभावे अ भावपरिणामे।
जाण चउव्विहमेअं पज्जवलोअ समासेण ॥ १५ ॥
वन्नरसगंधसंठाणफासठाण गइवन्नभेए य।
परिणामे य बहुविहे पज्जवलोग विआणाहि ॥ १६ ॥
आलुक्कइ पलुक्कइ लुक्कइ संलुक्कइ एगट्ठा।
लोगो अट्ठविहो खलु तेण सो वुच्चइ लोगो ॥ १७ ॥
दुविहो खलु उज्जोओ नायव्वो दव्व-भावसजुत्तो।
अग्गी दव्वुज्जोओ चदो सूरो मणी विज्जू ॥ १८ ॥
नाण भावुज्जोओ जह भणिअ सव्वभावदसीहि।
तस्स उवओगकरणे भावुज्जोअ विआणाहि ॥ १९ ॥

---

औदयिक औपशमिक क्षायिकश्च तथा क्षायोपशमिकश्च।
परिणामी सन्निपात षड्विधो भावलोकश्च ॥ १३ ॥
तीव्रो रागश्च द्वेषश्चोदीर्णो यस्य जन्तो।
जानीहि भावलोकमनन्तजिनदेशित सम्यक् ॥ १४ ॥
द्रव्य-गुण-क्षेत्र-पर्यव-भवानुभावश्च भावपरिणाम।
जानीहि चतुर्विधमेतत् पर्यवलोकं समासेन ॥ १५ ॥
वर्ण-रस-गन्ध-संस्थान-स्पर्श-स्थानानि गतिवर्ण-भेदश्च।
परिणामश्च बहुविध पर्यवलोक विजानीहि ॥ १६ ॥
आलोक्यते प्रलोक्यते लोक्यते संलोक्यते एकार्था
लोकोऽष्टविध. खलु तेन स उच्यते लोक ॥ १७ ॥
द्विविध खलूद्योतो ज्ञातव्यो द्रव्य-भावसंयुक्त।
अग्निर्द्रव्योद्योतश्चन्द्र· सूरो मणिर्विद्युत् ॥ १८ ॥
ज्ञानं भावोद्योतो यथा भणितं सर्वभावदर्शिभि।
तस्योपयोगकरणे भावोद्योत विजानीहि ॥ १९ ॥

लोगस्स उज्जोअगरा दव्वुज्जोएण न हु जिणा हुन्ति ।
भावुज्जोअगरा पुण हुन्ति जिणवरा चउव्वीसं ॥ २० ॥
दव्वुज्जोओज्जोओ पगासइ परिमिअम्मि खित्तम्मि ।
भावुज्जोओज्जोओ लोगालोगं पयासेइ ॥ २१ ॥
दुह दव्वभावधम्मो दव्वे सव्वस्स दव्वमेवहवा ।
तित्ताइसहावो वा गम्मा इत्थी कुलिंगो वा ॥ २२ ॥
दुह होइ भावधम्मो सुअ चरणे वा सुअम्मि सज्झाओ ।
चरणम्मि समणधम्मो खन्तिमाइ भवे दसहा ॥ २३ ॥
नाम ठवणातित्थ दव्वातित्थ च भावतित्थ च ।
इक्किक्कं पि अ इत्तो णेगविहं होइ नायव्वं ॥ २४ ॥
दाहोवसम तण्हाइ छेअण मलपवाहण चेव ।
तीहि अत्थेहिं निउत्त तम्हा त दव्वओ तित्थ ॥ २५ ॥
कोहम्मि उ निग्गहिए दाहस्सोवसमण हवइ तित्थ ।
लोहम्मि उ निग्गहिए तण्हावुच्छेअण होइ ॥ २६ ॥

---

लोकस्योद्योतकरा द्रव्योद्योतेन न खलु जिना भवन्ति ।
भावोद्योतकरा पुनर्भवन्ति जिनवराश्चतुर्विंशति ॥ २० ॥
द्रव्योद्योतोद्योत प्रकाशते परिमिते क्षेत्रे ।
भावोद्योतोद्योतो लोकाऽलोक प्रकाशते ॥ २१ ॥
द्विधा द्रव्य-भावधर्मो द्रव्ये सर्वस्य द्रव्यमेवाऽथवा ।
तिक्तादिस्वभावो वा गम्या स्त्री कुलिङ्गो वा ॥ २२ ॥
द्विधा भवति भावधर्मं श्रुतं चरणं वा श्रुते स्वाध्याय ।
चरणे श्रमणधर्मं क्षान्त्यादिर्भवेद् दशधा ॥ २३ ॥
नामस्थापनातीर्थं द्रव्यतीर्थं च भावतीर्थं च ।
एकैकमपि च इतोऽनेकविध भवति ज्ञातव्यम् ॥ २४ ॥
दाहोपशमस्तृष्णायाश्छेदनं मलप्रवाहणं चैव ।
त्रिभिरर्थैर्नियुक्तं तस्मात् तत् द्रव्यतस्तीर्थम् ॥ २५ ॥
क्रोधे तु निगृहीते दाहस्योपशमनं भवति तीर्थम् ।
लोभे तु निगृहीते तृष्णाव्युच्छेदनं भवति ॥ २६ ॥

अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [३४]



श्रीगुणचन्द्रसूरिविरचितटीकाविभूषितो

# हैमविभ्रमः।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादा-
म्भोजचञ्चरीकायमाणाभ्यां
श्रावकपं-हरगोविन्ददास-बेचरदासाभ्यां संशोधितः।

स च

रङ्गूननगरवास्तव्यश्रीजैनश्वेताम्बर-
सङ्घसाहाय्येन
वाराणस्यां
श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रित प्रकाशितश्च।

वीरसवत् २४३९।

मूल्यमाणकचतुष्टयम्।

YASHOVIJAYA JAINA GRANTHAMALA [34]

*THE*

# HAIMVIBHRAMA

WITH THE COMMENTARY

OF

**GUNACHANDRA SURI**

EDITED BY

SHRAVAK PANDIT HARGOVINDDAS

AND

SHRAVAK PANDIT BECHARDAS,

MOST DEVOTED SERVANTS OF

HIS HOLINESS SHASTRA VISHARAD JAINACHARYA

SHREE VIJAYA DHARMA SURI

WITH

THE PECUNIARY HELP OF

SHREE SHVETAMBAR SANGHA

OF

RANGOON

PRINTED AND PUBLISHED

BY

HARSHCHAND BHURABHAI,

Proprietor of Dharmabhyudaya Press

BENARES.



Veer-Era, 2439

Price 4 annas.

# प्रस्तावना.

कातन्त्रविभ्रमनाम्ना विश्रुतस्य कारिकारूपस्य शब्दतो लघीयसोऽपि शब्दशास्त्रविषयकव्युत्पत्तिप्रकर्षाधायकतया प्रयोजनतो महीयसो ग्रन्थस्य सर्वव्याकरणसाधारणोपयोगितया तत्तद्व्याकरणपरिशीलिना सुखेन तत्र प्रवेशमासूत्रयितुमनेके विद्वांसः स्वस्वाभिप्रेतव्याकरणानुसारेण बह्वीर्विवृत्तीर्व्यरचयन्, यासां सान्निध्यं विना क्लेशमधिकारित्वावगमाय तत्तद्व्याकरणोपलक्षिते विभ्रमनाम्नि ग्रन्थनाम पर्यवीवृतत्। श्रीसिद्धहेमचन्द्रव्याकरणमप्यधीतवन्तोऽध्येतारश्च मा भूवन्ननेनात्यावश्यकेन ज्ञानफलेन वञ्चिता इति कृपापरीतमानसैः **श्रीगुणचन्द्रसूरिभिरपि** हैमव्याकरणानुकूल्येन तत्त्वप्रकाशिकानाम्नी टीका विनिरमायि, यया ग्रन्थस्यास्य "हैमविभ्रम" इत्यभिधा प्रसिद्धिमागता।

टीकाकाराणामेतेषां सत्तासमयश्च

**"अकारि गुणचन्द्रेण वृत्तिः स्वपरहेतवे।**
**देवसूरिक्रमाम्भोजचञ्चरीकेण सर्वदा॥"**

इत्यस्यैव ग्रन्थस्य प्रान्तभागे देवसूरिशिष्यत्वमात्मनः स्वयं प्रकटयद्भिर्ग्रन्थकर्तृभिरेव देवसूरिसमानो निरूपयाम्बभूवे। देवसूरिसत्ताकालश्च

**"शिखि-वेद-शिवे जन्म दीक्षा युग्म-शरे-श्वरे।**
**वेदा-ऽश्व-शंकरे वर्षे सूरित्वमभवत्प्रभोः॥ २८६ ॥"**
**" रस-युग्म-रवौ वर्षे श्रावणे मासि संगते।**
**कृष्णपक्षस्य सप्तम्यामपराह्णे गुरोर्दिने॥ २८४ ॥**
**मर्त्यलोकस्थितं लोकं प्रतिबोध्य पुरन्दरम्।**
**बोधका इव ते जग्मुर्दिवं श्रीदेवसूरयः॥ २८५ ॥"**

इत्यनेन प्रभावकचरित्रनिबद्धेन श्लोकत्रितयेन, अन्यैश्चापि प्रमाणनयतत्त्वालोकालङ्कारप्रस्तावनायामस्मन्निर्दिष्टै प्रमाणैर्विक्रमीयः द्वादशशताब्दीरूपः सन्देहमन्तरेण विनिर्णीयते स्म । किञ्च,

"षट्तर्ककर्कशमतिः कविचक्रवर्ती
शब्दानुशासनमहाम्बुधिपारदृश्वा ।
शिष्याम्बुजप्रकरजृम्भणचित्रभानुः
कक्कल्ल एव सुकृती जयति स्थिरायाम् ॥ ५ ॥"

"इति पण्डितपुण्डरीकश्रीकक्कल्लोपदेशेन" इत्यादिनाऽस्या एव वृत्तेरवसाने टीकाकृद्भि. प्रस्तुतटीकाकृतावुपदेष्टृत्वेन प्रतिज्ञातस्य कक्कल्लनाम्नो विदुष , यस्य

"काकलो नाम कायस्थकुलकल्याणशेखरः ।
अष्टव्याकरणाध्येता प्रज्ञाविजितभोगिराट् ॥ ११२ ॥
प्रभुस्तं दृष्टमात्रेण ज्ञाततत्त्वार्थमस्य च ।
शास्त्रस्य ज्ञापकं चाशु विदधेऽध्यापकं तदा ॥ ११३ ॥"

इत्यादिना प्रभाचन्द्रसूरिप्रभृतयोऽपि हेमचन्द्रसूरिप्रबन्धादौ स्मरन्ति, सिद्धराजमहाराजसमानकालिकत्वमपि गुणचन्द्रसूरीणामुक्तरूपं सत्तासमयं संवदति ।

इदंग्रन्थमुद्रणावसरेऽस्मद्गुरुवर्यशास्त्रविशारदजैनाचार्यश्रीमद्विजयधर्मसूरीश्वरैर्निज हस्तलिखितादर्शद्वयमुपलम्भितम्, इति भूयस्तैरन्वग्राहिष्वहि ।

चित्तावधानेन पुस्तकद्वयसाहाय्येन संशोधितेऽस्मिन् ग्रन्थे दुर्वारदृष्टिदोषादिनाऽवशिष्टा अशुद्धीः कृपाकलितस्वान्ता सुमनस. सशोधयन्तु

इति प्रार्थयेते-

हरगोविन्द–बेचरदासौ.

राज्ञः कलाभृतस्ताराः प्रयान्ति परिवारताम् ॥ ९६ ॥
इतीव तप्यतस्तीव्रं तपस्तस्य स्वयं गुणाः ।
प्रादुरासन् निर्विकारं शब्दा इव विहायसः ॥ ९७ ॥
अथाकब्बरभूभर्ता गुरुमाजूहवद् मुदा ।
यः सर्वसूरिमालासु नायको नायकायते ॥ ९८ ॥
तद्दृष्टेर्भूभृदाचष्टे हृष्टो धर्मानुयोजनम् ।
सूरिर्वचांस्युत्ततार स्थास्नूनि बलवन्ति च ॥ ९९ ॥
श्रेयो दयामयं श्रेयो वाङ्मयेषु प्रतिष्ठितम् ।
जन्तोर्घात–घृणे स्यातां निदानं क्षयसंपदः ॥ १०० ॥
गङ्गा मान्या प्रतिष्ठादावित्याद्युपदिदेश सः
जयन्नेकपदे भट्टान् य उदात्तः स्वरानिव ॥ १०१ ॥
जितकाशी ततः सूरिर्विजहार धरातले ।
वृन्दं प्रबोधयंस्तेजःसमूहः स महीभुजाम् ॥ १०२ ॥
दत्त्वा विद्वत्पदं विद्याविजयायाहिवान् गुरुः ।
मत्पट्टेऽयं श्रिया–पुष्पबाणः संधानमेष्यति ॥ १०३ ॥
ध्यानाध्यक्षः सुरोऽप्यूचे पट्टोदयनगेऽर्कवत् ।
अयं सुधीस्तपोवारबाणः संधानमेष्यति ॥ १०४ ॥
अथास्ति स्तम्भतीर्थाख्या नगरी स्वैर्महोभरैः ।
स्वर्देशांस्तन्वती व्यस्तप्रदोषमनुगामिनः ॥ १०५ ॥
तत्रायात् सोत्सवं सूरिर्भूरितेजाः स शूरवत् ।
श्यामयन् दुर्मतींस्तप्तान् साग्निनिधानिवानिलः ॥ १०६ ॥

---

१ नायको हारमध्यमणिः । २ श्रिया कान्त्या पुष्पबाणः स्मरः, पक्षे पुष्प रागः, बाणो द्वेषस्तद्रहितोऽपुष्पबाण इत्यकारप्रश्लेषः ।

तत्र सोमाग्रजः श्रेष्ठी श्रीमल्लो भर्भरीभजन्[1] ।
पुण्यश्रियेव पाथोधिर्महानद्या नगापगाः ॥ १०७ ॥
समं सगोत्रैः सोऽन्येद्युः सूरिं व्यज्ञापयत्तराम् ।
ज्ञानक्रियाभ्यां सर्वेऽनुगन्तारस्त्वामतः परे ॥ १०८ ॥
हर्षाच्चिकीर्षुरुद्धर्षमहं तेनान्तिषद् निजः ।
पट्टे स्थाप्योऽतिवृष्ट्यादेः प्रथमेन त्वयारिणा ॥ १०९ ॥
स्वपट्टेऽस्थापयत् सूरिर्विद्यादिविजयं ततः ।
सत्पुत्रे सति नो भारं धर्मराजो विवक्षते[2] ॥ ११० ॥
विजयाद् देव इत्याख्यां सूरयोऽस्य वितेनिरे ।
स्वयं श्रयन्तः कीर्तीर्वा सिन्धवो नगनिम्नगाः ॥ १११ ॥
सूरिणा पददानेन श्रीमल्लेनोत्सवैर्नवैः ।
मोदिताः सुहृदः सद्योऽसुहृदो विमनीकृताः ॥ ११२ ॥
मुनीषुरसभू (१६५७) वर्षे शुद्धे राधकृताहनि[3] ।
प्राभूत् स सूरिर्भव्यानामिष्टिं कर्तुमलंतराम् ॥ ११३ ॥
आदिदेश प्रभुश्चार्वीं देशनां सप्रथां तथा ।
यथा जेगीयते भव्यैः क्षोभिताम्बुधिवर्णना ॥ ११४ ॥
मार्गणेभ्यो यथाभीष्टं श्रेष्ठिना स्पर्शनं[4] ददे ।
वाद्यनादैरधश्चक्रे क्षोभिताम्भोधिवर्णना ॥ ११५ ॥
सत्साधर्मिकवात्सल्यं श्रीमल्लेन विनिर्ममे ।
मित्रज्ञातिपरीवारपितृष्वस्रे[5] प्रतिश्रुतम्[6] ॥ ११६ ॥
न्यस्ताः कुंकुमहस्ताश्च सर्वत्र कुसुमस्रजः ।

---

१ श्रीपर्याय औणादिको भर्भरीशब्दः । २ वोढुमिच्छति । ३ चतुर्थ्याम् । ४ दानम् । ५ उपलक्षणेन सर्वसबन्धिभ्यः । ६ प्रतिज्ञातमिव ।

प्रासरत् स्त्रीजनस्याशीर्व्रागेका वाग्मिनः सतः ॥ ११७ ॥
तीर्थैकस्थपतिं तीर्थं भेजानस्तं प्रभुं जनः ।
एनसां कोऽभवद् भव्यो नान्तायालं भवानपि ? ॥ ११८ ॥
बभौ सूरिस्तपःशूरमहसा सहसा महान् ।
कुर्वन्नन्तःस्थितस्याविस्तलं विद्विषदम्भसः ॥ ११९ ॥
अनुत्सूत्रपदन्यासा सद्वृत्तिः सनिबन्धना ।
राजनीतिः सूरिराजः शब्दविद्येव दिद्युते ॥ १२० ॥
अजातदोषैर्दोषज्ञैः कनकाद् विजयादिकैः ।
विनेयैरसुरत् सूरिस्तारकैरिव चन्द्रमाः ॥ १२१ ॥
ख्याताः कनकविजया लावण्यविजयाः परे ।
वाचकाः श्रीप्रभोर्हृष्टाः शासनैः सामवायिकाः ॥ १२२ ॥
अन्यदाऽजूहवन् सूरीन् श्रीजहांगीरसाहयः ।
उपेयिवांसि कर्तारस्तद्यशांस्यधिकान्यथ ॥ १२३ ॥
सोत्सवं सूरिरप्येतत् पुरीमजातशात्रवीम् ।
श्रियं श्रयन् श्राद्धजनैः प्राप्नोति स्म परिष्कृताम् ॥ १२४ ॥
तथाऽवादि नृपपृष्टैर्धर्मार्थं सूरिभिर्वचः ।
राजन्यकान्युपायज्ञैर्यथा मुमुदिरेतराम् ॥ १२५ ॥
अथ तं भूभृदाचख्यौ हृष्टस्तत् तपसा विभो ! ।
विश्वानि चक्रिरे श्लोकैरेकार्थानि चरैस्तव ॥ १२६ ॥
महातपा इति क्षोणीभर्ताऽस्याख्यां तदाभ्यधात् ।
ततः कुपक्षाः क्षीणाशाः स्वयं मत्सारिणः परे ॥ १२७ ॥

---

१ "तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयो." इत्यनेकार्थः ।
२ " अपत्येऽधिपतौ तक्षिण स्थपतिर्निचये शये " इति विश्व. ।
३ "सुर दीप्त्यैश्वर्ययोः ।

ये इहात्मविदो विपक्षमध्ये सहसं वृद्धियुजोऽपि भूभुजः स्युः
नलिनैर्मलिनैरिवाकराद् वै पृथगस्मादचिरेण भावितातैः॥१२८

मुनिपनौ निपतौल्यभृति क्षितौ
जनिभृतो निभृतोऽग्रभवाम्बुधौ ।
घन इवोदयमाश्रयति स्वयं
शलैभतां लभतामसुहृद्गणः ॥ १२९ ॥

कृतकुवलयमोदस्वीयपादप्रसादै-
स्त्रिजगदपि पुनानः शंभुसृष्टप्रतिष्ठः ।
व्यहरदवनिपीठेऽप्यैन्दवीं नीतिमङ्क-
स्थलनियतनिषण्णश्रीः श्रुतां शुश्रुवान् सः ॥१३०॥

इति महोपाध्यायश्रीमेघविजयगणिविरचिते श्रीदेवा-
नन्दकाव्ये दिव्यप्रभापरनाम्नि ऐंकाराङ्के माघस-
मस्यायां नायकाभ्युदयवर्णननामा
द्वितीयः सर्गः ॥



---

१ वृद्धिभाजोऽपि ये नरा विपक्षमध्ये 'सभूय' इति शेष ,आत्म-विदोऽस्मात् साधोर्भूभुजश्च राज्ञ. सकाशात् पृथग्भूतास्तैराकरात् सरसो नलिनैरिव मलिनैर्भावितेन्वय. । २ निपो घटः । ३ शरभताम् ।

अर्हम्

श्रीविजयधर्मसूरिगुरुभ्यो नमः ।

कीर्तिराजोपाध्यायविरचितम् ।

# नेमिनाथमहाकाव्यम् ।

---

वन्दे तन्नेमिनाथस्य पदद्वन्द्वं श्रियां पदम् ।
नाथैरसेवि देवानां यद् भृङ्गैरिव पङ्कजम् ॥ १ ॥
क्रूरग्रहैरनाक्रान्ताः सदा सर्वकलान्विताः ।
चिरमत्र विजेषीरन् गुरवो नूतनेन्दवः ॥ २ ॥
नानाश्लेषरसप्रौढां हित्वा कान्तां मुनीश्वराः ।
ये चाहुस्तादृशीं वाचं वन्दनीयाः कथं न ते ? ॥ ३ ॥
यो दोषाकरमात्मानं ख्यापयन् विशदोऽपि सन् ।
विशदीकुरुते विश्वं तस्मै सभ्येन्दवे नमः ॥ ४ ॥
खलः खल इवासारः पशुकल्पश्च नीरसः ।
त्यज्यते दूरतः प्राज्ञैः काङ्क्षद्भिस्सौख्यमात्मनः ॥ ५ ॥
शास्त्रारम्भे नमस्कार्यावार्यानार्यावुभावपि ।
एतद्द्वितययोगे हि गुणागुणविवेचनम् ॥ ६ ॥

---

१ कदाग्रहैः, चन्द्रपक्षे राह्वादिखेटैः । २ सकलज्ञानयुता, इन्दुपक्षे कला षोडशोंऽशस्तेन युताः, अत्रोपमालंकार । ३ धर्माचार्याः पूज्या वा । ४ शान्तरस, स्त्रीपक्षे श्रृङ्गाररसः । ५ मनोहरां स्त्रियं च । ६ य. सज्जनः विशदोऽपि निर्मलोऽपि सन् स्वमात्मानं दोषाकर दूषणखनि प्रकथयन् विश्व विशदीकुरुते पवित्रयति, य इन्दुः विशदोऽपि श्वेतोऽपि आत्मान दोषाकर रात्रिकर प्रकथयन् विश्वं सर्व धवलीकुरुते ।

क्व श्रीनेमिजिनस्तोत्रं क्व कुण्ठेयं मतिर्मम ।
उत्पाटयितुमिच्छामि तर्जन्या मोहतो गिरिम् ॥ ७ ॥
परं प्राज्ञति मन्दोऽपि गुरुदेवप्रसादतः ।
शिक्षितो हि शुको जल्पेदपि तिर्यङ् नृभाषया ॥ ८ ॥
जडात्मकं प्रभोर्भक्तिर्मामुल्लापयतीह वा ।
सशब्दाम्भोदमालेव बलादपि कलापिनम् ॥ ९ ॥
लोकनाभ्या मध्यभागे जम्बुद्वीपोऽस्ति विश्रुतः ।
गंभीरो वर्तुलाकारो नाभिदेश इव स्त्रिया ॥ १० ॥
षड्वर्षधराश्चित्रमनादिनिधनोऽपि सन्
लक्षयोजनमानोऽपि निस्संख्यैर्यो जनैः श्रितः ॥ ११ ॥
पार्श्वतः सर्वतो यस्तु लवणोदाधिनाऽऽवृतः ।
आलीढः परिवेषेण वृत्तश्चन्द्र इवाऽऽबभौ ॥ १२ ॥
तत्राऽस्ति भारतं वर्ष कोदण्डाकारधारकम् ।
स्वश्रियां गर्वतः शङ्के लीलया वक्रतां गतम् ॥ १३ ॥
वैताढ्येन द्विधा भक्तं राजतेन रराज यत् ।
सीमन्तकेन काम्येन यथा सीमन्तिनीशिरः ॥ १४ ॥
गङ्गासिन्धुनदीयोगात् षट्खण्डं यदजायत ।
संप्राप्तप्रसराभिस्तु को वा स्त्रीभिर्न खण्डितः ? ॥ १५ ॥
तत्रासीत् परमश्रीकं नाम्ना सूर्यपुर पुरम् ।
सर्वस्वमिव मेदिन्याः स्वभर्तेव कुलस्त्रियाः ॥ १६ ॥

---

१ अङ्गुष्ठसमीपस्थयाऽङ्गुल्या । २ अज्ञानत । ३ प्राज्ञ इवाचरति । ४ मयूरम् । ५ षड् वर्षधराः कुलगिरयो यत्र स । ६ जनैः लोकैः । ७ कोदण्डः धनुः । ८ रुप्यमयेन । ९ सीमन्तकः 'सेंथो' इति भाषायाम् ।

न मन्दोऽत्र जनः कोऽपि परं मन्दो यदि ग्रहः ।
वियोगो नापि दम्पत्योर्वि-योगस्तु परं वने ॥ १७ ॥
वधोऽन्तरङ्गशत्रूणां यत्रान्येषामसम्भवात् ।
न्यायवद्भूपतेर्भावादुदयो धर्मचारिणाम् ॥ १८ ॥
मन्दाक्षसंवृताङ्गोऽपि न मन्दाक्षकुरूपभाक् ।
सदापीडोऽपि यत्रासीद् विपीडो माननीजनः ॥ १९ ॥
रत्नश्रेणिचिता यत्र पाण्डुरा दधिपिण्डतः ।
आवासाः श्रीमतां रेजुः हिमाद्रेर्दारिका इव ॥ २० ॥
भुजङ्गसङ्गनिर्विण्णा वक्षःस्खलितकञ्चुकाः ।
दृष्ट्वैव घूर्णयन्त्यत्र सर्पिणीवत् पणाङ्गनाः ॥ २१ ॥
यत्र यूनां परीरम्भात् त्रुटद्धारा वधूजनाः ।
स्मरं वर्धापयन्तीवोच्छलद्भिर्मौक्तिकाऽक्षतैः ॥ २२ ॥
पावनं यौवनं यूनां यत्र क्षेत्रमिवाशुभत् ।
बहुधान्योपकृच्चारु-वल्लभारागकारणम् ॥ २३ ॥
भोगि-पुण्यजन-श्रीदैः श्रितत्वाद् यत्परं पुरम् ।
भोगवत्य-लका-लङ्कासान्निपात इवाभवत् ॥ २४ ॥
युवानः खलवद् यत्र ना-र्यालिङ्गनलालसाः ।

---

१ मूर्खे । २ कुग्रहः शनिर्वा । ३ वीना पक्षिणा योगः । ४ लज्जया गोपितदेह इत्यर्थः । ५ अपट्विन्द्रियाणि कुत्सितरुप च भजते, तादृशो न । ६ प्रधानशेखरः । ७ विगता पीडा यस्मात् स विपीडः । ८ यौवन बहुधा बहुप्रकारेण, परोपकारसार वल्लभारागहेतुः, क्षेत्र बहुधान्यस्य प्रभूतान्नस्य, उपकारक सत् चारवो ये वल्ला तेषा भार समूहः, अगाश्चः वृक्षास्तेषा कारणम् । ९ नारीणामालिङ्गन तस्मिन् लालसाः, पक्षे आर्याणामुत्तमाना सङ्गे लालसा अत्यन्तमभिलाषुका न, खलत्वात् ।

दूषयन्ति कलाकेलीमुपमातीतविग्रहैः ॥ २५ ॥
किंकिणीनाददम्भेन पुण्ये ननू प्रेरयन्निव ।
यत्राभितश्चलत्युच्चैर्विहाराणां ध्वजव्रजः ॥ २६ ॥
रराजीत्यापणश्रेणिरराजद्वारगोपुरम् ।
नानावस्तूनि बिभ्राणा नाऽनानन्दितनागरा ॥ २७ ॥
दलैरिवैन्दवैर्दृब्धा हिमपिण्डमया इव ।
प्रासादा भ्रेजिरे राज्ञां यत्र स्फाटिकभित्तयः ॥२८॥ युग्मम्
गंभीरा बन्धुराकारा जललावण्यपूरिताः ।
वाप्यश्चकाशिरे यत्र कान्तानामिव नाभयः ॥ २९ ॥
विचित्रोपलविच्छित्तिर्वर्तुलाकारसंस्थितिः ।
प्राकारा रुरुचे यस्य भूदेव्या इव कुण्डलम् ॥ ३० ॥
कोमलाङ्ग्यो लताकान्ताः प्रवृत्ता यस्य कानने ।
पुष्पवत्योऽप्यहो चित्रं तरुणा-लिङ्गनं व्यधुः ॥ ३१ ॥
दरिद्रैः शीतला रात्रिर्दुःखेन त्याज्यतेऽम्बरम् ।
नवोढा-तरुणैर्यत्र दुःखेन त्याज्यतेऽम्बरम् ॥ ३२ ॥
समुद्रदयिता भाति गणिकेव यदन्तिके ।
भुजङ्गात्तरसास्वादा वेणीमोहितनागरा ॥ ३३ ॥
सा कापि रम्यहर्म्यश्रीः शोभा वप्रस्य कापि सा ।
पुरस्य तस्य यां वीक्ष्य न कम्पयति कः शिरः ? ॥ ३४ ॥
यथार्थाख्योऽभवत्तत्र समुद्रविजयो नृपः ।
आसमुद्रं यतो वैरिविजयोऽनेन निर्ममे ॥ ३५ ॥

---

१ विग्रहः कायः कलहो वा । २ रजस्वलाः कुसुमवत्यश्च । ३ तरुणेन वयस्थेन आलिङ्गन व्यधुः, पक्षे तरुणा वृक्षेण इत्यसमस्त पदम् । ४ खम् । ५ वस्त्रम् । ६ भुजङ्गः सर्प, वेश्यापतिर्वा । ७ वेणी प्रवाहः, कबरी वा ।

यो विद्विषां श्रिया सार्धं जग्राह पितुरासनम् ।
जहार चार्थिनां दौस्थ्यं पौरुषेण सह द्विषाम् ॥ ३६ ॥
त्राणभापितगोभर्ता यो वैशोप्सितदर्शनः ।
रंगकुशलताहारी चण्डषण्ड इवाबभौ ॥ ३७ ॥
अमन्यराजराजेभ्यः प्रतिजग्मुः श्रियोऽखिलाः ।
प्रस्तावे पितृसद्मभ्यो भर्तारमिव कन्यकाः ॥ ३८ ॥
विभूतिसदृशी शक्तिः शक्तेरनुगुणा क्रिया ।
क्रियया सदृशी ख्यातिः ख्यातेरनुगुणं यशः ॥ ३९ ॥
यशसा सदृशं रूपं रूपेण सदृशं वयः ।
षगं वयोऽधिका बुद्धिरेतस्य समजायत ॥ ४० ॥
प्रतिपक्षैः सपक्षैश्च दुष्प्रेक्ष्यः प्रेक्ष्य एव सः ।
कौशिकैश्चक्रवाकैश्च चण्डरोचिरिवाभवत् ॥ ४१ ॥
प्राणेभ्योऽपि धनेभ्योऽपि योषिद्भ्योऽप्याधिकं प्रियम् ।
सोऽमंस्त मेदिनीजानिर्विशुद्धं धर्ममार्हतम् ॥ ४२ ॥
क्लीबत्वं केवला क्षान्तिश्चण्डत्वमविवेकिता ।
द्वाभ्यामतः समेताभ्यां सोऽर्थसिद्धिममन्यत ॥ ४३ ॥
काले वर्षति पर्जन्यः सूते रत्नानि मेदिनी ।
प्रजाश्चिराय जीवन्ति तस्मिन् भुंजति भूतलम् ॥ ४४ ॥
न कार्पण्यात्, परं स्थित्यै सोऽकार्षीद् धनसंचयम् ।
आकाराय ललौ लोकाद् भागधेयं न तृष्णया ॥ ४५ ॥
गोगोप्तृत्वात् सुपर्वत्वाद् वधात् परबलस्य च ।

---

१ पृथ्वीपतय बलिवर्दाश्च । २ वशा स्त्री गौश्च । ३ वृक्षं । ४ सूर्य । ५ पालयति । ६ भागधेयः करः । ७ गोः भुवः पक्षे स्वर्गस्य रक्षकत्वात् । ८ शोभनपर्वत्वात्, पक्षे देवत्वाद् । ९ वैरिबलस्य, पक्षे दैत्यविशेषस्य ।

स्वामित्वाज्जयवाहिन्याः स देवेन्द्रतुलां दधौ ॥ ४६ ॥
न्यायबुद्धिमतोऽमात्यानन्तर्वाणिशिरोमणीन् ।
स संजग्राह भूभर्ता विनेयानिव सद्गुरुः ॥ ४७ ॥
स एकोऽपि जगज्जेता सेनालीढः किमुच्यते ।
केवलोऽपि बली सिंहः किं पुनर्व्यूढकंकटः ॥ ४८ ॥
तीव्ररस्याविवोद्दण्डे भूपेऽस्मिन्नुदिते सति ।
निस्तेजा ग्रहमालेव पराऽस्थाद्राजमण्डली ॥ ४९ ॥
तस्य नीतिमतो राज्ये विवाहे करपीडनम् ।
न पुनः पौरलोकेषु संजातं करपीडनम् ॥ ५० ॥
त्रिवर्गसाधने सैष परस्परमबाधया ।
प्रावृतत्त्रिजगत्सृष्टिविधौ कमलभूरिव ॥ ५१ ॥
वज्रदण्डायते सोऽयं प्रत्यनीकमहीभुजाम् ।
कल्पद्रुमायते कामं पादद्वन्द्वोपजीविनाम् ॥ ५२ ॥
भूपः स एव दक्षोऽभून्न्यायान्यायविचारणे ।
क्षीरनीरविवेके हि हंस एव प्रशस्यते ॥ ५३ ॥
समृद्धमभजद्राज्यं स समस्त-नयाऽमलम् ।
कामीव कामिनीकायं ससम-स्तन-यामलम् ॥ ५४ ॥
रूपलावण्यसम्पन्ना शिवादेवीति नामतः ।
जयश्रीरिव मूर्ताऽस्य बभूव सहचारिणी ॥ ५५ ॥
लेभे सतीषु या रेखां धीषु पण्डा मतिर्यथा ।

---

१ जयेनोपलक्षिता वाहिनी चमूः, तस्याः, पक्षे इन्द्राण्याः । २ अन्तर्वाणिः शास्त्रवित् । ३ 'सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकंकटः' इत्यमरः । ४ परापूर्वस्य 'असूच् क्षेपणे' इत्यस्याद्यतन्या रूपम्, परास्ताऽऽसीदित्यर्थः । ५ करः भागधेयः । ६ कमलभूः ब्रह्मा । ७ वज्रदण्ड इवाचरति । ८ प्रत्यनीकः शत्रुः । ९ समस्ता नया राजनीतयः, तैरमलं पवित्रम् । १० समेन-तुल्येन, सश्रीकेन वा स्तनयामलेन-कुचयुग्मेन, सह वर्तत इति

पुरोगतां कुलस्त्रीषु वचःकलाः कलास्विव ॥ ५६ ॥
यथात्मीयैर्गुणग्रामैः शारदेन्दुसहोदरैः ।
पवित्रीक्रियते धात्री जलौघैरिव गंगया ॥ ५७ ॥
सुशीला सा महादेवी धर्मवान् स नराधिपः ।
वयोर्योगेऽनुरूपेऽभूत् प्रयासः सफलो विधेः ॥ ५८ ॥
अन्यदा सा शिवादेवी सुखशय्यागता निशि ।
किञ्चित् स्वपिति जागर्ति प्रदोषे पद्मिनी यथा ॥ ५९ ॥
अस्मिन्नवसरे च्युत्वा विमानादपराजितात् ।
द्वाविंशः श्रीजिनाधीशस्तस्याः कुक्षाववातरत् ॥ ६० ॥

परिहृतपरजन्माहारकायप्रचारः
सुचिरममरलोके दिव्यभोगांश्च भुक्त्वा ।
प्रकटितशुभयोगे कार्तिकस्याद्यपक्षे
प्रभुरवतरति स्म द्वादशीवासंतेय्याम् ॥ ६१ ॥

उदारताराग्रहपूगपूर्णा नभःस्थली तालतमालवर्णा ।
मुक्ताभृता शीतगुवल्लभाया रराज वैडूर्यकरण्डिकेव ॥६२॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनेन्द्रचरिते
महाकाव्ये च्यवनकल्याणिकवर्णनो नाम प्रथमः सर्ग.



---

कर्तरि क्तः । वासतेयी रात्रि. । चन्द्रप्रियायाः

# द्वितीयः सर्गः

अथापतन्तं करिणं नभःस्थलात्
पीनाङ्गमुच्चं धवलं झरन्मदम् ।
प्राप्तोपमं निर्झरवारिधारिणा
स्वप्ने शिवा[1] प्रैक्षत सा हिमाद्रिणा ॥ १ ॥
पीनं दधानं ककुदं समुन्नतं
नीहारमुक्ताहरहंसपाण्डुरम् ।
सर्वाङ्गपुष्टं वृषभं शुभाकृतिं
व्यक्तं समुत्कीर्णमिवेन्दुमण्डलात् ॥ २ ॥
पिशंगवासाः[2] किमयं नरायणः
सुवर्णकायः किमयं विहङ्गमः ।
सविस्मयं[3] तर्कितमेवमादितः
सिंहं स्फुरत्काञ्चनचारुकेसरम् ॥ ३ ॥
संस्नाप्यमानां शुभगाकृतिं श्रियं
श्च्योतद्रसौ पीनकुचौ च बिभ्रतीम् ।
सुधांशुजामङ्गभवार्तिशान्तये
न्यस्तौ विधात्रेह सुधाघटाविव ॥ ४ ॥
पुष्पस्रजं सौरभगौरवोज्ज्वलां
प्रलम्बरोलम्बकदम्बकाकुलाम्[5] ।
करम्बितां गारुडरत्नभङ्गिभि-
रिवावदातस्फटिकाक्षमालिकाम्[6] ॥ ५ ॥

---

१ प्रभुजननी । २ पीताम्बरः । ३ क्रियाविशेषणमेतत् । ४ देवानाम्
५ रोलम्बकदम्बकैः भृङ्गसमूहैः, आकुला व्याप्ताम् । ६ ग्रथिताम् ।

सुधामयं वर्तुलचन्द्रमण्डलं
मध्येस्फुरच्छ्यामललक्षणेक्षणम्[1] ।
चन्द्रोपलस्थालमिवोल्लसत्पयो
हरिन्मणीमण्डितमध्यमण्डलम् ॥ ६ ॥
मातर्यथाहं निधिरुग्रतेजसां
भावी तथा ते तनयस्तमस्तुदाम् ।
इति प्रजल्पन्तामिवाधिदीधितिं[2]
दिवाकरं व्योमतटाकसारसम् ॥ ७ ॥
इन्द्रध्वजं कैरवपांसुपाण्डुरं
वर्णैर्विभक्तं कलकिंकिणीस्वरम् ।
देवावतारप्रमदादिवोच्चकै-
र्नृत्यन्तमल्पानिलधूतपल्लवैः ॥ ८ ॥
मणीबकैः[3] संविलितैः[4] शितच्छदैः
संशोभिकण्ठं कलसं जलप्लुतम् ।
फणीन्द्रचूडामणिमण्डितस्फटै-
र्व्याप्तं सुधाकुण्डमिवामलं लघु ॥ ९ ॥
सरः प्रफुल्लाम्बुजषण्डमण्डितं[5]
पूर्णं समन्तादतिशुद्धवारिणा ।
अगण्यकारुण्यरसेन पूरितं
मौनीश्वरं चित्तमिव प्रसादयुक् ॥ १० ॥
अलब्धमध्योऽस्मि यथा जलैरहं
गुणैस्तथाऽयं भविताभकोऽम्ब ! हे ।

---

१ मध्ये स्फुरतः श्यामललक्षणस्य चिह्नस्य ईक्षण दर्शन यत्र तत् । अधिककिरणम् । ३ पुष्पैः । ४ मिश्रितैः । ५ अब्जादिसमूहे ण्डः ।

इतीव संसूचयितुं समुद्यतं
　निधिं जलानां लुलदूर्मिसंकुलम् ॥ ११ ॥
मनुष्यवाग्गोचरतीतवर्णनं
　स्फुरद्विमानं कलकिंकिणीक्वणम् ।
तीर्थाधिनाथं किल संमहेठितुं
　समागतं क्षोणितलेऽपराजितम् ॥ १२ ॥
किं तारकाणां बत सन्निपातः
　किं वा प्रदीप्रप्रभदीपराशिः ।
उत्पादयन्तं मनसीति तर्कं
　विचित्ररत्नोच्चयमिद्धरोकम् ॥ १३ ॥
विकस्वराङ्गारकणस्वरूपं
　धूमध्वजं धूसरधूममुक्तम् ।
बिभ्राणमुष्माणमतीव तीक्ष्णं
　शोणाश्मनां राशिमिवाधिकान्तिम् ॥ १४ ॥
(चतुर्दशकुलकम्.)

दशार्हपृथ्वीपतिपट्टराज्ञी
　स्वप्नान् प्रधानानधिगम्य सामून् ।
मोहैकमुद्रां त्यजति स्म निद्रां
　भास्वन्मयूखानरविन्दनीव ॥ १५ ॥
उत्थाय देवी शयनीयतस्ततो
　जगाम भर्त्रा समधिष्ठितां भुवम्

---

१ अतीतार्थकस्तीतशब्दः । २ प्रभोर्गमने श्रमो भविष्यतीति स्वस्मिन् प्रस्थाप्य भुवि सम्प्रहेठितु मोक्तु समागतमिव । ३ तन्नामकं विमानं यस्माच्च्युत्वा प्रभुः शिवाकुक्षाववातरत् । ४ 'रोकोऽश्मौ' इति हैमः ।

विस्मेरचामीकरवारिजासना
लक्ष्मीर्यथा राहुरिपोरुरःस्थलीम् ॥ १६ ॥
आगच्छ पद्माक्षि ! निषीद चात्र
प्रयोजनं किं ? प्रतिपादयस्व ।
तां वीक्ष्य मत्तेभगतिं सहर्षां
गुर्वीं जगादेति गिरं नरेन्द्रः ॥ १७ ॥
देहद्युतिद्योतितादिग्विभागा
सुस्निग्धकेशाञ्जनवेणिदण्डा ।
स्नेहप्लुता सोज्वलदीपिकेव
रराज राज्ञः पुरतो निषण्णा ॥ १८ ॥
स्वामिन्निदानीं सुखतल्पगाहं
चतुर्दश स्वप्नवरान् ददर्श ।
तेषां विचारामृतमापिपासु-
र्युष्मन्मुखेन्दोरिति सा जजल्प ॥ १९ ॥
स्वप्नानथोक्तान् प्रियया ऽवगृह्य ता-
नीहामविक्षन्नृपतिर्धियां निधिः ।
सम्प्रश्नवाक्यानि विनेयमालयो-
पढौकितानि प्रवरो गुरुर्यथा ॥ २० ॥
निजाननाम्भोरुहसौरभश्रिया
प्रियास्यपद्मं प्रतिवासयन्नथ ।
स्वप्नार्थमर्घ्यं सुविचार्य धीरधी-
रिति स्फुटार्थां गिरमाददे नृपः ॥ २१ ॥

---

१ चामीकर सुवर्णम् । २ विष्णो । ३ बहुव्रीहौ "सक्थ्यक्ष्णः स्वाङ्गे" इति टे स्त्रियां ङ्यन्तस्य रूपम् । ४ आस्य मुखम् ।

चतुर्दशानां जगतामधीश्वरं
चतुर्दशप्राणिगणाभयप्रदम् ।
चतुर्दशस्वप्नविलोकनात् प्रिये !
चतुर्दिगीड्यं[1] प्रसविष्यसे सुतम् ॥ २२ ॥

यो मुक्तसत्पोतवया दृढासनो
दोर्दण्डशुण्डोद्धृतदुष्टविष्टरः[2] ।
स्फुरन्मदाम्भःकटका[3]तिदुर्गमो
हस्तीव भावी परवारणो[4]ऽसकौ ॥ २३ ॥

अलङ्करिष्णुप्रसमग्रयादवा-
नपत्यरत्नं शुभमेकमप्यदः ।
यथा वयःपावनयौवनं वयः
सर्वान् शरीरावयवान् शरीरिणः ॥ २४ ॥

अपश्चिमो[5] ज्ञानवतां विपश्चितां
धुरि स्थितस्त्यागवतां महीभृताम् ।
पूर्वाभिधेयो युधि शौर्यशालिनां
भावी सुतस्ते प्रथमो यशस्विनाम् ॥ २५ ॥

स्कन्धप्रबन्धाधिकशोभयाऽन्वितो
वित्रास्य कम्रान् सकलाऽन्यगोपतीन् ।
अनन्यसामान्यनिजौजसा हठा-
दाक्रम्य गां षण्ड इवैष भोक्ष्यते ॥ २६ ॥

अद्यास्मदीयः किल यादवान्वयो
बभूव भद्रे ! परमर्द्धिभाजनम् ।
सम्भाव्यमेयोन्नतिमङ्गले कुले

---

१ स्तुत्यम् । २ विष्टरं पीठ वृक्षश्च । ३ कटकः सैन्य गिरिनितम्बश्च । ४ वैरिवारणः पक्षे प्रधानगजः । ५ प्रथमः ।

यतोऽवतारो महतां समीष्यते ॥ २७ ॥

मुखाब्जहर्म्यैष्टिकपाटसम्पुटं
संयोज्य खिन्नेव सदर्थसङ्गिनी ।
इत्याद्युदित्वा रसनासनेऽथ सा
सुखं विशश्राम नरेन्द्रभारती ॥ २८ ॥

ततस्तथेति पतिपद्य हर्षिता
गत्वा नरेन्द्रानुमतेर्निजास्पदम् ।
निनाय दुःस्वप्नभयेन जाग्रती
राज्ञी निशां धर्मकथादिकौतुकैः ॥ २९ ॥

रात्रिस्त्रिया मुग्धतया तमोऽञ्जनै-
र्दिग्धानि काष्ठातनयामुखान्यथ[1] ।
प्रक्षालयत् पूषमयूषपाथसा[2]
देव्या विभातं ददृशे स्वतातवद् ॥ ३० ॥

यत्रागते[3] पूरुषपुंगवाः सदा
विलासशय्याभ्य उदस्थुरुच्चकैः ।
अभ्यागतेषु प्रतिपत्तिवेदिनः
खल्वौचिती न स्खलयन्ति कुत्रचिद् ॥ ३१ ॥

यत्रेन्दुरस्ताचलचूलिकाश्रयी
बभूव यावद्गलदश्रुमण्डलः ।
म्लानानना तावदभूत् कुमुद्वती
कुलाङ्गनानां चरितं ह्यदः स्फुटम् ॥ ३२ ॥

यस्मिंश्च राकापरिभोगकल्काद्[4]
युक्तं यदिन्दोः परिहीयते श्रीः ।

---

१ दिक्कुमारिकावदनानि । २ रविकिरणजलेन । ३ प्रभ ाते ।
४ राका पौर्णमासी सरजा. कन्या. च ।

सप्तर्षिभिस्तत्किमिहापराद्धं
प्रास्तप्रभास्तेऽपि यतो बभूवुः ॥ ३३ ॥
नभःस्थलं ग्लानविभोडुमण्डलं
यत्रान्वकार्षीत् सरसः श्रियं श्रिया ।
निद्रायमाणाऽपरिमाणकैरवा-
वलिभिरालीढविनीलपाथसः ॥ ३४ ॥
यत्रारुणं केवलमिन्दुकान्तया[2]
संतज्यते चित्रभमम्बरं वरम्[3] ।
शोकादिव प्राणपतेर्महत्तमा-
दस्तं प्रयातस्य तुषाररोचिषः[4] ॥ ३५ ॥
संवेशनेन[5] श्लथभूषणाम्बराः
स्वकान्तरक्ताः शुचयः पतिव्रताः
आवव्रिरे यत्र ससंभ्रमा वपु-
र्भानोः करस्पर्शमहाभयादिव ॥ ३६ ॥
जिनं च जैनाः सुगतं च सौगताः
शिवं च शैवाः कपिलं च कापिलाः
यस्मिंश्च दध्युर्मुखजाश्चतुर्मुखं
कांश्चिन्न लौकायतिकास्तु[6] देवताम् ॥ ३७ ॥
यस्मिन् स्वचेतोऽभिमतार्थसिद्धये
परेण संन्यस्तमुदग्रसाधनम्[7] ।
निर्जप्रयोगैः[8] प्रतिबाधितुं क्वचि-

१ निस्तेजस. । २ रात्र्या । ३ चित्राणि भानि नक्षत्राणि यत्र तत्, पक्षे चित्रैर्भातीति-चित्रभं वस्त्रम् । ४ चन्द्रस्य । ५ संभोगेन स्वापेन वा । ६ नास्तिकाः । ७ उन्नत सैन्यमनुमानं च । ८ स्वकीयैरनुमानैर्व्यापारैश्च ।

दैच्छन् धरित्रीपतयश्च तार्किकाः ॥ ३८ ॥
नक्षत्रमुक्ताकणमण्डिताम्बरा
समुल्लसत्कैरवचारुलोचना ।
चन्द्रं परद्वीपविवर्तिनं पतिं
यत्रानुयातीव सती विभावरी ॥ ३९ ॥
यत्रोदितं वीक्ष्य रविं दरीषु सं-
निमील्य चक्षूंषि पतन्ति कौशिकाः ।
परश्रियं द्रष्टुमशक्नुवत्तमा
भवन्त्यजस्रं लघवो ह्यवाङ्मुखाः ॥ ४० ॥
ध्याने मनः स्वं मुनिभिर्विलम्बितं
विलम्बितं कर्कशरोचिषा तमः ।
सुष्वाप यस्मिन् कुमुदं प्रभासितं
प्रभासितं पङ्कजबान्धवोपलैः ॥ ४१ ॥
यत्र भ्रमद्भ्रामरचुम्बितानना-
मवेक्ष्य कोपादिव मूर्ध्नि पद्मिनीम् ।
स्वप्रेयसीं लोहितमूर्तिमावहन्
कठोरपादैर्निजघान तापनः ॥ ४२ ॥
यस्मिन् सवित्रा नलिनी स्वपादै-
र्विमृद्यमानाऽप्यलमुल्ललास ।
ही प्रेम तद् यद्वशवर्तिचित्तः
प्रत्येति दुःखं सुखरूपमेव ॥ ४३ ॥
यस्मिन् विवस्वानुदयी महीरुहां
नित्यं तदंशुप्रतिरोधिनामपि ।
छायामतुच्छां वितनोति सर्वतः

---

१ सूर्यकान्तैः । २ रवि.

सन्तो हि शत्रुष्वपि पथ्यकारिणः ॥ ४४ ॥

तमस्ततेर्यत्र विडम्बकोऽप्यसौ
रविर्न लेभे मुनिलोकतुल्यताम् ।
एकस्तु भा-वार-करम्बितात्मको
भावा-र-हीनो विदितोऽपरो यतः ॥ ४५ ॥

खेटातिचारप्रविशुद्धिकर्मठाः
श्रेयस्तमोराशिविचारणक्षमाः ।
अनेकधा योगनिलीनदृष्टयो
यत्रर्षयो ज्योतिषका इवाबभौ ॥ ४६ ॥

आमोदवत्कोकनदव्रजानां
मरालवीनामबला नवीनाः ।
आमोदवत्कोकनदव्रजानां
कुर्वन्ति यस्मिन् विशकलपवर्तम् ॥ ४७ ॥

दिवामुखं कोकनितम्बिनीसुखं
तादृग्विधं वीक्ष्य विचक्षणास्ततः ।
इत्यूचिरे चन्दनशीतला गिरः
तं मागधा बोधयितुं नरेश्वरम् ॥ ४८ ॥

प्रातःक्षणाद्गलितकान्तिरसौ शशाङ्को
व्यक्तं व्यनक्ति कमलां चपलां नरेन्द्र !।

---

१ प्रभासमूहेन व्याप्त स्वरूपं यस्यासौ । २ अरीणा समूह आरं भावश्चासौ—अन्तरङ्ग च तद् आरं च तेन रहित । ३ पापव्रतमालिन्यशोधनशूराः, पक्षे ग्रहातिचारशुद्धिकारका । ४ तमोराशिः पुण्यपापनां राहुमेषादीना वा राशिः । ५ आमोदवन्तः-सप्रमोदा., कोकाश्चक्रवाका यत्र, स चासौ नदश्च तं व्रजन्ति तेषाम् । ६ हंसपक्षिणाम् । ७ आमोदवन्ति च तानि कोकनदानि—रक्तोत्पलानि, तेषा व्रजाना विशकलपवर्तेऽन्वयः। ८ नितम्बिनी ललना ।

निद्रामतो जहिहि भो भव जागरूको
देवं जिनं स्मर विधेहि विभातकृत्यम् ॥ ४९ ॥
वैवस्वतैः किरणबाणगणैः प्रभिन्नं
देव ! त्वदीयरिपुचक्रमिवान्धकारम् ।
नंष्ट्वाऽधुना प्रविशति स्म दिगन्तमेतत्
काऽन्या गतिर्बलिनिपीडितकातरस्य ॥ ५० ॥
सिन्दूर-दाडिम-जपाकुसुमप्रभेण
नव्येन देव ! रविणा तव तेजसा[1] च ।
रक्तीकृते सपदि भूगतवस्तुजाते
कैलास एष किल राजति कुङ्कुमाभः ॥ ५१ ॥
भर्तुः क्षये परिजनः क्षयमेति पूर्वं
तस्योदयेऽभ्युदयमञ्चति देव ! नूनम् ।
क्षीणौ प्रगेऽत्र रजनी-रजनीश्वरौ य-
दुद्गच्छतः स्म दिवसो दिवसाधिपश्च ॥ ५२ ॥
प्रत्यग्रजाग्रदरविन्दमरन्दबिन्दु-
ग्रासाग्रसंग्रहणलोलुभ एव भृङ्गः ।
राजन् ! पतत्यतिरसाद् नलिनीवनाङ्के
चक्षुर्यथा प्रणयिनीवदने प्रियस्य ॥ ५३ ॥
निद्रासुखं समनुभूय चिराय रात्रा-
वुद्भूतशृंखलरवं परिवर्त्य पार्श्वम् ।
प्राप्य प्रबोधमपि देव ! गजेन्द्र एष
नोन्मीलयत्यलसनेत्रयुगं मदान्धः ॥ ५४ ॥
हेषारवं विदधतां दधतां महांसि
गत्यानिलं च जयतां तव मन्दुरायाम्[2] ।

१ तेजांसि । २ अश्वशालायाम् ।

राजेन्द्र ! सैन्धवदलानि तुरङ्गमाणां
खण्डोज्वलान्युपनयन्ति तुरङ्गपालाः ॥ ५५ ॥
एतानि तानि तत्र सुन्दरमन्दिरस्य
द्वारे तथा निखिलदैवनिकेतनेषु ।
प्राभातिकानि निनदन्ति परःशतानि
तूर्याणि देव ! जयमङ्गलसूचकानि ॥ ५६ ॥
सपदि देव ! रथाङ्गविहङ्गमाः
कथमपि व्यतिलङ्घितरात्रयः ।
समधिगम्य निजप्रमदा मुदा
विरहितां-रहिता ननृतुस्तराम् ॥ ५७ ॥
शुकविना मरुदध्वनि लीयते
तदनु चूतफलेषु निलीयते ।
जठरवह्निरतश्च विलीयते
प्रमदया समदं सह लीयते ॥ ५८ ॥
नृपविशाल ! विशाऽलसमानसाः
पुर-तडाग-तडागनिवासिनः ।
संवरला वर-लाघवगामिनः
वनम-रालमरालखगा ययुः ॥ ५९ ॥
पक्वान्नभेदान् बहुधोपभुज्य
देवाहरन्ते परमोदकानि ।

---

१ रथाङ्गाश्चक्रवाकाः । २ विरहिताभिः स्वप्रियाभिः अरहिताः- सहिता इत्यर्थ । ३ आकाशे । ४ उड्डीयते । ५ तडागस्तालवृक्षः । ६ 'हंसा वारला वरला' इत्यादि शब्दरत्नाकरे । ७ अरालो वक्रः । ८ प्रकृष्टलड्डुकान्, पक्षे परमाण्युदकानि ।

समुद्गिरन्त्योऽस्फुटवर्णवाचो
धनाढ्यबाला इव पक्षिमालाः ॥ ६० ॥
राजेन्द्र ! पूर्वाचलचूलिकास्थः
सूर्योऽधुना विद्रुमकिंशुकाभः ।
पूर्वाङ्गनाया इव भालदेशे
काश्मीरलिप्तस्तिलकश्चकास्ति ॥ ६१ ॥
आकर्ण्यैवं मागधानां मनोज्ञा
वाचः पथ्यास्तथ्यवाग् यादवेन्द्रः ।
निद्रां हित्वा प्राप्य सद्यः प्रबोधं
भ्रश्यन्माल्यं तल्पमुज्झाञ्चकार ॥ ६२ ॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते
महाकाव्ये प्रभातवर्णनो नाम द्वितीयः सर्गः ।



---

१ काश्मीर कुङ्कुमम्

# तृतीयः सर्गः

प्राभातिकं कर्म समाप्य सम्यक्
समाहितो भूमिपतिः सतंन्त्रः[1] ।
अथाश्रयत् पर्षदि सिंहपीठं
मृगाधिपोऽद्राविव चारुशृङ्गम् ॥ १ ॥

शीर्षोच्छ्रितच्छत्रनिवारितोष्मा
सोऽधिष्ठिताष्टापद[2]भद्रपीठः ।
जिगाय लक्ष्मीं सुरपादपाधः
शक्रस्य हेमाद्रिशिलास्थितस्य ॥ २ ॥

विलोलबालव्यजनान्तराले
तस्य प्रसन्नं मुखमाबभासे ।
मरालबालद्वयमध्यवर्ति
सौवर्णमुन्निद्रमिवाम्बुजातम् ॥ ३ ॥

काम्यं प्रकृत्याऽपि तदीयरूपं
सिंहासनाश्रायि विशेषतोऽभूत् ।
मनोहरः केवल इन्द्रनीलः
पुनः सुवर्णोपरि संन्यवेशि ॥ ४ ॥

वन्द्यं तदीयं चरणारविन्दं
प्रवर्तमानं मणिपादपीठे ।
सामन्तभूपा युगपत् प्रणेमु-

---

१ तन्त्रैः प्रधानैः सहितः, प्रधानपुरुषसहित इत्यर्थः ।

२ अधिष्ठितमष्टापदस्य सुवर्णस्य भद्रपीठं सिंहासनं येन सः ।

विश्रंसिचूडामणिभिः शिरोभिः ॥ ५ ॥
यं यं प्रसन्नेन्दुमुखं स राजा
विलोकयामास दृशा स्वभृत्यम् ।
शिश्लेष तं तं गुरुहर्षलक्ष्मीः
कामातुरेव प्रमदा स्वकान्तम् ॥ ६ ॥
ताम्बूलवल्लीदलरञ्जितोष्ठी
च्छन्दानुगा नीतिविनीतिपात्रम् ।
पवित्रवेषा चकमे प्रकामं
नृपं पतित्वेन सभावधूस्तम् ॥ ७ ॥
माणिक्यमुक्ताफलदीप्तदेह-
स्तुषारभूषांशुकभूषिताङ्गः ।
सुदुर्विगाह्यैः कटकैरगम्यो
दधौ तदानीं स हिमाद्रिलीलाम् ॥ ८ ॥
स्वयूथनाथैरिव यूथनाथ-
स्तारासमूहैरिव शारदेन्दुः ।
सान्द्राम्रवृक्षैरिव कल्पवृक्षो
मन्त्रिप्रधानैः स वृतो बभासे ॥ ९ ॥
तज्ज्ञेन लोकेन विचार्यमाणां
कमप्यनाख्येयरसं दधानाम् ।
कथासुधां श्रोत्रपुटैः सतर्षं
पपौ स पूर्वः क्षितिनायकानाम् ॥ १० ॥
अथ प्रभुः स्वप्नविचारविज्ञान्
नरान् समाह्वातुमयुङ्क्त भृत्यान् ।

---

१ विनीतिः विनय. । २ अद्रिनितम्बैः पक्षे सेनाभिः ।

आकारितास्तेऽप्युपतास्थिरे तैः
जयाशिषं भूमिभुजे ददानाः ॥ ११ ॥
देवः प्रिये ! को वृषभोऽयि किं गौः ?
नैवं वृषाङ्कः किमु शङ्करो ? न ।
जिनो नु चक्रीति वधूवराभ्यां
यो वक्रमुक्तः स मुदे जिनेन्द्रः ॥ १२ ॥
साम्राज्यलक्ष्मीं बुभुजे य आदौ
चारित्रलक्ष्मीं तदनु प्रपेदे ।
लेभे ततः केवलबोधलक्ष्मीं
लक्ष्मीं स वः पातु युगादिदेवः ॥ १३ ॥
विध्वंसयन्तं तमसां समूहं
प्रकाशयन्तं परितोऽर्थतत्त्वम् ।
चित्ताम्बुजे शास्त्रमणिं दधाना
रात्राविवाट्टे वणिजः प्रदीपम् ॥ १४ ॥
स्नाताः प्रशस्ताः कृतयः कृतज्ञा
बलक्षचोक्षे वसने वसानाः ।
नृपाज्ञया स्वप्नविदो निषेदु-
स्ते भद्रपीठेषु पुराधृतेषु ॥ १५ ॥ युग्मम्.
चित्रैः पवित्रैः फलमाल्यवस्त्रै-
रपूपुजत् तानथ मेदिनीशः ।
नैमित्तिकाः प्रश्नकराय यस्मात्
फलानि दृष्ट्वा फलमादिशन्ति ॥ १६ ॥

---

१-धवलसुन्दरे. "वलक्षः धवलोऽर्जुनः" इत्यमरः, 'चोक्षः सुन्दर-गीतयोः' इति हेमाचार्यपादा. । २ वस्त्रे । ३ दधतः ।

अद्यार्धरात्रे महिषी गजादीं-
श्चतुर्दश स्वप्नवरान् ददर्श ।
तेषां फलं किम् ? प्रतिपादयध्वं
नैमित्तिकानेवमुवाच तान् सः ॥ १७ ॥
विचारयामासुरमूनुदारान्
स्वप्नान् मिथस्ते प्रथमं नृपोक्तान् ।
ततोऽगृणन्नेवममी विदग्धाः
विचार्य वाचं हि वदन्ति धीराः ॥ १८ ॥
सश्रीककल्याणमया उदाराः
स्वप्ना अमी देव ! विवृद्धिकाराः ।
एषां फलं वक्तुमनीश्वराः स्मो
जडा यदत्राङ्गिरसोऽपि वाचः ॥ १९ ॥
तथापि शास्त्रानुसृतेरमीषां
किञ्चिद् विचारं प्रतिपादयामः ।
अन्धोऽपि किं साधु न याति मार्ग
करावलम्बेन सलोचनस्य ॥ २० ॥
निशम्यतां यादवराज ! तस्मात्
स्वप्नानिमान् पश्यति या किल स्त्री ।
ब्रह्मेव तत्कुक्षिसरोरुहान्त-
श्चक्री जिनो वावतरत्यवश्यम् ॥ २१ ॥
शास्त्रानुसाराद् मतिवैभवाच्च
विभाव्यतेऽस्माभिरिदं नरेन्द्र ! ।
अवातरद् देव्युदरे जिनेन्द्रो
यत्कल्पशाखीव सुमेरुकुञ्जे ॥ २२ ॥

१ बृहस्पतेः ।

मुदा चतुःषष्टिरमर्त्यनाथा
यं भृत्यलोका इव सेवितारः[1] ।
तत्रापरेषां सलिलान्नभाजां
तपस्विनां[2] का गणना नृपाणाम् ॥ २३ ॥

नवस्वतीतेषु शुभावहेषु
मासेषु सार्धाष्टमवासरेषु ।
देवी त्रिलोकीजनपूजनीयं
पुत्रं पवित्रं जनयिष्यतीश ! ॥ २४ ॥

नैमित्तिकानां हृदयंगमास्ता
निशम्य वाचो विमलाः क्षितीशः ।
गुरुप्रमोदाद् द्विगुणो भवन् स
मृदुस्तथेति स्म गिरं प्रवक्ति ॥ २५ ॥

तेभ्यो बुधेभ्योऽथ नृपः स याव-
ज्जीवं ददाति स्म धनं धनाढ्यः ।
वृक्षः सुराणामिव युग्मजेभ्यो
गणो निधीनामिव चक्रभृद्व्रजः ॥ २६ ॥

प्रीतास्ततः स्वप्नविदः प्रशस्यै-
राशीर्वचोभिर्नृपमभ्यनन्दन् ।
कुत्रापि किं नीतिविदः कुलिनाः
स्वाचारमार्गं व्यतिलङ्घयन्ति ? ॥ २७ ॥

हृष्टा विसृष्टाः क्षितिपेन शिष्टा
नैमित्तिकास्तेऽथ युयुर्गृहाणि ।
उत्थाय भूपोऽपि मृगेन्द्रपीठा-
दभ्यर्णवर्ती[3] स बभूव देव्याः ॥ २८ ॥

---

१ सेविष्यन्त इत्यर्थः । २ वराकाणाम् । ३ समीपस्थः ।

स्वप्नार्थमर्घ्यं कथितं कृतज्ञैः
प्राणप्रियायै रहसि क्षितीशः ।
न्यवेदयत् स्नेहविमुग्धचेता
इष्टं यदिष्टाय निवेदनीयम् ॥ २९ ॥
तत् प्रेयसोक्तं प्रियपुत्रजन्म-
प्ररूपि वाक्यं विनयेन राज्ञी ।
श्रुत्वैवमेवेति वचो ब्रुवाणा
प्रतीच्छति स्म प्रणयार्द्रचित्ता ॥ ३० ॥
ततः प्रभृत्येव बभार गर्भं
सा यादवाधीश्वरधर्मपत्नी ।
कल्पद्रुमं मन्दरकन्दरेव
रत्नोच्चयं रोहणमेदिनीव ॥ ३१ ॥
आस्ते सुखेनाथ सुखेन शेते
सुखेन तिष्ठत्ययते सुखेन ।
भुङ्क्ते च पथ्यं यदुराजजाया
यत्नेन गर्भं परिपोषयन्ती ॥ ३२ ॥
लज्जावशाद् वक्ति न मेऽभिलाषं
वस्तूनि कानि स्पृहयालुरेषा ? ।
सखीस्तदीया इति पृच्छति स्म
मृदुः क्षितीन्द्रः परमादरेण ॥ ३३ ॥
यो दोहदोऽस्या उदपादि देव्या-
स्तूर्णं[1] स पूर्णः परिपूर्ण एव ।
कुत्रापि किं निर्मलपुण्यभाजां
सम्पद्यते नात्र समीहितोऽर्थः ? ॥ ३४ ॥
ये दुर्जया ये च पुरा न नेमु-
र्गर्भस्थिते स्वामिनि तेऽपि भूपाः ।

---

१ शीघ्रम् ।

दशार्हराजं निषिषेविरेऽरं
गुरुं विनेया इव भक्तिभाजः ॥ ३५ ॥
स्फुरत्प्रभामण्डलमण्डिताङ्गः
कालेऽथ देव्याः प्रकटीबभूव ।
पुत्रो विभक्तावयवः सुधर्मो-
पपातशय्यात इवामरेन्द्रः ॥ ३६ ॥
जगज्जनानन्दथुभन्दहेतु-
र्जगत्त्रयक्लेशसमुद्रसेतुः ।
जगत्प्रभुर्यादववंशकेतु-
र्जगत् पुनाति स्म स कम्बुकेतुः ॥ ३७ ॥
अप्राप्तपूर्वं सुखमापुरस्मिन्
क्षणे क्षणं नारकजन्तवोऽपि ।
महात्मनां जन्म जगत्पवित्रं
केषां प्रमोदाय न जाघटीति ॥ ३८ ॥
सपदि दश दिशोऽत्रामेयनैर्मल्यमापुः
समजनि च समस्ते जीवलोके प्रकाशः ।
अपि ववुरनुकूला वायवो रेणुवर्जम्
विलयमगमदापद्दौस्थ्यदुःखं पृथिव्याम् ॥ ३९ ॥
प्रसृमरकिरणाङ्गश्रीजिनादित्यकान्तं
मरकतमणिमुख्याऽमेयरत्नैरुपेतम् ।
उदयशिखरिलक्ष्मीमापदे तत् तदानीं
क्षितिपतिमुकटस्य श्रीदशार्हस्य धाम ॥ ४० ॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये
जन्मकल्याणिकवर्णनो नाम तृतीयः सर्गः ।

---

१ जगज्जनानामानन्दथोरानन्दस्य भन्दस्य–कल्याणस्य च हेतुः । २ शङ्खलाञ्छन इत्यर्थः । ३ णम्प्रत्ययान्तस्य रूपम्, रेणुं वर्जयित्वेत्यर्थः ।

# चतुर्थः सर्गः



सर्वासां दिक्कुमारीणां समकालं चकम्पिरे ।
आसनान्यथ सर्वत्र वृक्षा वाताहता इव ॥ १ ॥
प्रयुक्तावधयो जन्माऽज्ञासिषुस्तास्ततः प्रभोः ।
भूपाल्य इव वृत्तान्तं नीवृ[1]तः प्रहित[2]स्पशाः ॥ २ ॥
हारपुष्पावलीरम्याः पीनस्तनमहाफलाः ।
दुकूलपल्लवाः कामवल्लिका इव जंगमाः ॥ ३ ॥
सहसा प्रमदोत्फुल्लनयना दाम[3]रोचिताः ।
सहसा विलसद्भ्रूषा नयना[4]दामरोचिताः ॥ ४ ॥
कर्णयोः कान्तिभिः पूर्णे दधाना मणिकुण्डले ।
सहागतौ तदास्यानि पुष्पव[5]न्नाविवेक्षितुम् ॥ ५ ॥
दिग्देव्योऽपि रसालीनाः स[6]भ्रमा अप्यवि[7]भ्रमाः ।
[8]वामा अपि च नो [9]वामा भूषिता अप्यभूषि[10]ताः ॥ ६ ॥
भगवज्जन्मजं मोदममान्तमिव चान्तरा ।
वहन्त्यो बहिरङ्गेऽपि प्रभामण्डलदम्भतः ॥ ७ ॥
ततश्च दिक्कुमार्योऽष्टावूर्ध्वलोकादुपाययुः

---

१ जनपदात् । २ प्रहिताः-प्रेषिताः स्पशाः-चरा याभ्यस्ताः । ३ पुष्पमालाभूषिताः । ४ नय नदन्तीति नयनादाः, तेच तेऽमराश्च नयनादामराः, तेषामुचिता योग्या । ५ सूर्याचन्द्रमसौ । ६ सविलासाः । ७ नास्ति विभ्रमो यासा ता., भ्रमरहिता इत्यर्थः । ८ रम्या. स्त्रियो वा । ९ प्रतिकूलाः । १० भुव्युषिता भूषिताः, न तथेति अविभूषिताः ।

वृक्षाद् भृङ्ग्य इवाम्भोजं शिवायाः सूतिकागृहम् ॥ ८ ॥
षड्भिः कुलकम्.

तास्त्रिः प्रदक्षिणीकृत्य जगन्नाथं च मातरम् ।
प्रणिपत्य च सानन्दमनिन्द्यमिदमूचिरे ॥ ९ ॥

जय त्वं देवदेवेन्द्रमानवेन्द्रस्तुतक्रम ! ।
नमस्तुभ्यं शिवे ! मातर्जगदानन्दनन्दने ! ॥ १० ॥

गौर्याः लम्बोदरः पुत्रः श्रियोऽनङ्गस्तु नन्दनः ।
कयोपमीयसे मातः ! सर्वाङ्गोत्कृष्टनन्दने ! ॥ ११ ॥

अज्ञानप्रसवा नित्यं वल्लिका त्रिदिवौकसाम् ।
सर्वज्ञप्रसवे ! मातः ! कथं तव तयोपमा ॥ १२ ॥

स्त्रीजातिरद्य निन्द्यापि श्लाघनीया जगत्त्रये ।
यतः सर्वगुणावासः प्रादुरासीज्जगद्गुरुः ॥ १३ ॥

पुरुषेष्वेष एवाम्ब ! जातस्ते सूनुरुत्तमः ।
किं स्युः सुमेरुषण्डेषु[1] सर्वे वृक्षाः सुरद्रुमाः ? ॥ १४ ॥

न भेतव्यं त्वया देवि ! जन्म ज्ञात्वा जिनेशितुः ।
सूतिकर्म वयं कर्तुं दिक्कुमार्यः स्म आगताः ॥ १५ ॥

निवेद्यात्मानमेवं ताः परितः सूतिकागृहम् ।
जह्रुः संवर्तवातेना[2] योजनादशुचीनणून् ॥ १६ ॥

एताः संहृत्य संवर्तं तत्कालमिन्द्रजालवत् ।
निषेदुस्तत्र गायन्त्यो गुणग्रामान् जिनाम्बयोः ॥ १७ ॥

वक्षस्थललुलन्माल्या[3] रत्नाभरणभूषिताः ।
भृशं तद्भावमापन्नाः साक्षादिव मरुल्लताः ॥ १८ ॥

मेखलाकिङ्किणीनादवाचालजघनस्थलाः ।
ता अधोलोकतोऽप्यष्टावरिष्टं[5] समुपागमन् ॥१९॥ युग्मम्.

---

१ षण्ड वनम् । २ योजनमभिव्याप्येत्यर्थः । ३ माल्य माला ।
४ देवीरूपम् । ५ सूतिकागृहम् ।

इमा अपि निवेद्य स्वं प्राग्वच्च सौम्यदुर्दिनम् ।
ऊर्ध्वं विचक्रिरे मेघं दीपिका इव कज्जलम् ॥ २० ॥
वर्षन् गन्धाम्बुपाथोदो भूतले योजनावधौ ।
निन्ये समं रजस्तापौ तमोहिमे इवांशुमान् ॥ २१ ॥
पञ्चवर्णानि पुष्पाणि कुमार्यो ववृषुस्ततः ।
प्रफुल्लाः सुमनोवाव्यः पवनप्रेरिता इव ॥ २२ ॥
पतितैरपि पुष्पैस्तैर्भूतलं सुभगीकृतम् ।
विपद्यप्युपकुर्वन्ति पूतात्मानो हि निश्चितम् ॥ २३ ॥
उपरिष्टात् प्रसूनानां भ्राम्यद्भ्रमरमण्डलम् ।
अन्वकार्षीत् तदा तत्र नीलोत्तरपटश्रियम् ॥ २४ ॥
प्रजगौ गुञ्जनव्याजाद् भ्रमराली प्रभोर्गुणान् ।
मधुच्छलेन पुष्पाली ताम्बुलं प्रददे किल ॥ २५ ॥
दिक्चक्रं सुरभीचक्रे स्वसौरभ्यगुणेन तैः ।
नूनं सुमनसां लोके परार्थैकफला गुणाः ॥ २६ ॥
पुष्पाम्बुवर्षमेतास्तु संवृत्य दिव्यशक्तितः ।
गायन्ति स्म गुणान् नेतुः स्वोचितस्थानमास्थिताः ॥२७॥

रुचकपर्वतपूर्वदिशं पुन-
र्वसुमिताः ककुभामथ कन्यकाः ।
यदुमहीपतिमन्दिरमागमन्
जलनिधिं गिरितः सरितो यथा ॥ २८ ॥
जिनमभूर्जननीमपि पूर्ववद्
विनुनुवुर्वचसा शिरसाऽनमन् ।
स्तुतिनती विदधाति न कः सुधीः

---

१ पुष्पाणां सता च । २ नायकस्य प्रभोः ।

शुभवतो भवतोयधिमोचिनः[1] ॥ २९ ॥
तदनु ताः सुरनाथदिशि[2] स्थिताः
करगृहीतमनोरमदर्पणाः
भगवतो विपुलं विमलं यशः
समुदिता[3] मुदिता विदिता जगुः ॥ ३० ॥
रुचकदक्षिणतः[4] क्षणतस्ततो
द्विसहिताः षडमूः पुनराययुः ।
स्तनयुगेन घनेन विराजिता:
कमलकोमलकोशविडम्बिना ॥ ३१ ॥
नतजिना रविसूनुदिशि स्थिताः
करपयोजमहाकनकाकुलाः ।
मधुर-साधु-रसा जगदुः प्रभो-
रविकलं[5] विकलङ्कमिमा यशः ॥ ३२ ॥
अष्टौ प्रतीच्या रुचकाचलस्य
कृष्टाः प्रभोः पुण्यभरैः समेत्य ।
द्राक् सूतिसद्मन्यवतेरुरेताः
प्रिया मृगाणामिव रज्जुबद्धाः ॥ ३३ ॥
स्वं ज्ञापयित्वा प्रणता निषेदुः
प्रभोः प्रतीच्यां दिशि देवतास्ताः ।
हस्ताम्बुजातैर्धुततालवृन्ता
दिग्नागकान्ता इव लोलकर्णाः[6] ॥ ३४ ॥
प्राप्तास्तथोदग्रुचकाद्रितो याः

---

१ संसारसमुद्रमोचकस्य । २ पूर्वस्यामित्यर्थः। ३ मिलिताः । ४ दक्षिण-दिशि । ५ निराबाधं यथा स्यात्तथा । ६ प्रेङ्खितव्यजनाः ।

प्रकीर्णकव्यग्रकराः प्रसन्नाः ।
दिश्युत्तरस्यामवतस्थिरे ता
गृहीतकाया इव सिद्धयोऽष्टौ ॥ ३५ ॥
आगुर्विदिग्भ्यो रुचकस्य यास्तु ।
सौन्दर्यवर्यावयवाश्चतस्रः ।
ता अप्यवन्दन्त जिनं शिवां च ।
हर्षप्रकर्षाद् द्विगुणीभवन्त्यः ॥ ३६ ॥
गीतान्यथो दीपधरा लपन्त्यः
स्थिता विदिक्ष्वेव बभासिरेऽमूः ।
उपासितं देवमुपेयुरासां
कृत्वेव रूपं विदिशश्चतस्रः ॥ ३७ ॥
एयुस्तथा या रुचकाद्रिमध्य-
वासाश्चतस्रश्चतुराः कुमार्यः ।
नालं प्रभोश्छिन्दुरादृतास्ता
आत्मानमावेद्य जिनेन्द्रमातुः ॥ ३८ ॥
सूत्यालयात् त्रीणि पवित्ररम्भा-
गृहाणि पूर्वोत्तरदक्षिणासु ।
आशासु निर्माय तदन्तराले
पीठं चतुःशालमिमाश्च चक्रुः ॥ ३९ ॥
रात्नं विनिर्यत्किरणाकुलं तत्
पीठं विरेजे कदलीगृहान्तः ।
छन्नेऽभितः कोमलपद्मपत्रैः
स्वस्थाम्भसीव प्रतिबिम्बचन्द्रः ॥ ४० ॥
आदाय नाथं करसम्पुटेन

१ प्रकीर्णकं चामरम् ।

देवीं शिवां दत्तभुजावलम्बाः ।
एता अपाचीनकदल्यगारे
निन्युः कुमार्यः प्रथमं विधिज्ञाः ॥ ४१ ॥
जिनं जिनाम्बां च निवेश्य पीठे
संवाहनां तत्र विधाय तज्ज्ञाः ।
उद्वर्तनं दास्य इव व्यधुस्ता
द्रव्यैरपूर्वैरनयोः शरीरे ॥ ४२ ॥
प्राचीनरम्भानिलयेऽथ नीत्वा
तौ स्नापनीयौ शुचिना जलेन ।
संस्नापयामासुरिमा अमर्यः
पुण्याधिकानाममरा हि भृत्याः ॥ ४३ ॥
गन्धसारघनसारविलेपं
कन्यका विदधिरेऽथ तदङ्गे ।
कौतुकं महदिदं यदमूषा-
मप्यनश्यदखिलः खलु तापः ॥ ४४ ॥
तीर्थनाथमथ तज्जनयित्री-
मंशुकानि परिधाप्य मृदूनि ।
योजयन्ति विमलैः स्म कुमार्यो
भूषणैरिव सुरद्रुमवल्ली ॥ ४५ ॥
विश्वभूषणमवाप्य तैः प्रभुं
भूषणैर्विरुरुचेऽधिकं श्रिया ।
निश्चितं हि परमर्द्धिहेतवे
जायतेऽधिकगुणस्य संगमः ॥ ४६ ॥
दिव्यभूषणवती शिवाधिकं

---

१ द्वितीयाद्विवचनम् ।

रोचते स्म रमणीयदर्शना ।
केवलाऽपि शुभगा हरिन्मणी
किं पुनः कनकसङ्गशालिनी ॥ ४७ ॥
देवता अथ शिवां सनन्दनां
निन्यिरे धनददिग्निकेतनम् ।
धर्मशास्त्रसहितां मतिं गिरः
सद्गुरोरिव विनेयमानसम् ॥ ४८ ॥
क्षुद्राद् हिमाद्रेस्त्रिदशाभियोगिकैः
गोशीर्षदारूण्युपढौकितान्यथ ।
दग्ध्वाऽनले ताश्च तदीयभस्मनो
रक्षीकृते पोट्टलिकां व्यधुस्तयोः ॥ ४९ ॥
आस्फालयन्त्योऽथ मिथोऽस्मगोलकौ
विशालतालाविव चन्द्रनिर्मलौ ।
महीधरायुर्भविता भवानिति
प्रोचुः कुमार्यः प्रभुकर्णकोटरे ॥ ५० ॥
विश्वत्रयीत्राणपरायणस्य
विश्वत्रयीमङ्गलकारिणोऽस्य ।
यन्मङ्गलाशीर्वचनं च रक्षा
स स्वामिभक्तिक्रम एव तासाम् ॥ ५१ ॥
कर्पूरकृष्णागुरुधूपधूम्रे
सूत्यालयेऽनल्पविभूषतल्पे ।
संस्थाप्य नाथं जननीं तथैताः
प्रभोर्गुणान् गातुमितः प्रवृत्ताः ॥ ५२ ॥
वाटिकर्तुपतिना यथाऽऽदृता
सत्यबोधसहिता यथा क्रिया ।

श्रीर्यथा शुचिविवेकसंगता
 शक्रदिग् दिनकराश्रिता यथा ॥ ५३ ॥
नीलरत्नकलिता यथोर्मिको
 द्यौर्यथाऽभिनवमेघशालिनी ।
भृङ्गयुक् कनककेतकी यथा
 दृग् यथा विमलकज्जलाञ्जिता ॥ ५४ ॥
अस्मगर्भमणिकायकान्तिमा
 स्वामिनी सुतवरेण संयुता
निर्मलाऽखिलसतीशिरोमणी
 रोचते स्म जननी शिवा तथा ॥ ५५ ॥

त्रिभिः कुलकम् ।

षट्पञ्चाशद् दिक्कुमार्यः किलैवं
 भक्त्या युक्तास्तीर्थनाथस्य सम्यक् ।
सर्वं कृत्वा सूतिकृत्यं कृतज्ञाः
 धन्यंमन्या स्थानमात्मीयमीयुः ॥ ५६ ॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये
दिक्कुमार्यागमवर्णनो नाम चतुर्थः सर्गः



---

१ अङ्गुलीयकम् ।

क्षणं निदध्याविति वज्रपाणिः ॥ ६ ॥
कः शैलराजं शिरसा बिभित्सुः ?
कर्णे मृगेन्द्रं ननु को जिघृक्षुः ? ।
जाज्वल्यमाने मम कोपवह्ना-
वद्याहुतिः कः कृपणोऽत्र भावी ॥ ७ ॥
कोऽयं वराकः शतकोटिकोटि-
दीप्रप्रदीपे भविता पतङ्गः ।
योऽचालयद् मूढमतिर्मदान्धो
मृगेन्द्रपीठं ननु मामकीनम् ॥ ८ ॥
विपक्षपक्षक्षयबद्धकक्षं
विद्युल्लतानामिव संचयं तत् ।
स्फुरत्स्फुलिङ्गं कुलिसं करालं
ध्यात्वेति यावत् स जिघृक्षति स्म ॥ ९ ॥
सेनापतिस्तावदमुं प्रणम्य
मौलौ निबद्धाञ्जलिरित्युवाच ।
प्रवर्तमाने मयि सेवकेऽस्मिन्
नाथैष ते किंविषयः प्रयासः ? ॥ १० ॥

अष्टाभिः कुलकम्

स्वस्वामिनं सेवकसाध्यकार्ये
प्रवर्तमानं तु निरुद्यमो यः ।
उर्ध्वः स्थितः पश्यति कातराक्षो
भृत्येन तेन किं विधेयमीश ! ॥ ११ ॥
यस्योपरि स्वामिपदा नु रुष्टाः
निदिश्यतां नाथ ! स सेवकाय ।
यथाऽचिरादेव तव प्रसादाद्

दिक्पालपूजां विदधामि तेन ॥ १२ ॥
सेनाधिपेनेत्युदितः क्षणं स
योगीव तस्थे स्थिरचित्तवृत्तिः ।
ततः प्रयुक्तावधिरुग्रधन्वा
जन्म प्रभोः प्रैक्षत पूजनीयम् ॥ १३ ॥
सुदुःसहोऽपि त्रिदशाधिपस्य
क्रोधः शशाम प्रभुदर्शनेन ।
पीयूषपानेन यथा ज्वरार्त्तिः
पयोदसेकेन यथा दवाग्निः ॥ १४ ॥
मोहादवज्ञा विहिता तवार्य !
क्षमस्व मेऽस्मादपराधमेकम् ।
भवन्तमन्यं च विराध्य यस्मा-
त्त्वामेव सत्त्वाः शरणं प्रपन्नाः ॥ १५ ॥
गृणन्निति इन्द्रो निजदुष्कृतं त-
च्चकार मिथ्या प्रभुसाक्षिकं सः ।
निन्दन् स्वपापं गुरुपादमूले
मुक्तो भवेत् तेन यतः शरीरी ॥ १६ ॥ युग्मम्.
ससम्भ्रमोऽथो दधिपाण्डुकीर्ति-
र्मृगेन्द्रपीठादुदतिष्ठदिन्द्रः ।
अमन्दचन्द्रातपदर्शनीयः
प्राचीनशैलादिव शीतभानुः ॥ १७ ॥
दृष्टिं ददाना सकलासु दिक्षु
किमेतदित्याकुलितं ब्रुवाणा ।
उत्थानतो देवपतेरकस्मात्

१ चन्द्रातप -चन्द्रिका।

श्रीर्यथा शुचिविवेकसंगता
   शक्रदिग् दिनकराश्रिता यथा ॥ ५३ ॥
नीलरत्नकलिता यथोर्मिको
   द्यौर्यथाऽभिनवमेघशालिनी ।
भृङ्गयुक् कनककेतकी यथा
   दृग् यथा विमलकज्जलाञ्जिता ॥ ५४ ॥
अस्मगर्भमणिकायकान्तिना
   स्वामिनी सुतवरेण संयुता
निर्मलाऽखिलसतीशिरोमणी
   रोचते स्म जननी शिवा तथा ॥ ५५ ॥

त्रिभिः कुलकम् ।

षट्पञ्चाशद् दिक्कुमार्यः किलैवं
   भक्त्या युक्तास्तीर्थनाथस्य सम्यक् ।
सर्वं कृत्वा सूतिकृत्यं कृतज्ञाः
   धन्यंमन्या स्थानमात्मीयमीयुः ॥ ५६ ॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये
दिक्कुमार्यागमवर्णनो नाम चतुर्थः सर्गः



---

१ अङ्गुलीयकम् ।

## पञ्चमः सर्गः

अथोर्ध्वलोके सहसा चकम्पे
जिनप्रभावश्वसनप्रणुन्नम् ।
आरूढसंक्रन्दनराजहंसं
पीठं सुधर्मासरसीपयोजम् ॥ १ ॥
आसाद्य सिंहासनकम्पनच्छलं
प्रविश्य देहेऽथ रुषा निशाचरी ।
क्षमाविवेकावहरद् बिडौजसः
छिद्रेषु नूनं प्रहरन्ति वैरिणः ॥ २ ॥
ललाटपट्टं भृकुटीभयानकं
भ्रुवौ भुजंगाविव दारुणाकृती ।
दृशः कराला ज्वलिताग्निकुण्डवत्
चण्डार्यमाभं मुखमादधेऽसकौ ॥ ३ ॥
ददंश दन्तै रुषया हरिर्निजौ
रसेन सच्या अधराविवाधरौ ।
प्रस्फोरयामास कराावितस्ततः
क्रोधद्रुमस्योल्वणपल्लवाविव ॥ ४ ॥
अङ्गानि सर्वाण्यपि वासवस्य
विकारमीयुः समकालमेवम् ।
समागते हि व्यसने विवेकी
धैर्यावलम्बं विरलः करोति ॥ ५ ॥
पराक्रमाक्रान्तसमस्तशत्रुः
स मन्यमानस्त्रिजगत् तृणाय ।
दंदह्यमानोऽथ रुषाग्निनाऽन्तः

क्षणं निदध्याविति वज्रपाणिः ॥ ६ ॥
कः शैलराजं शिरसा बिभित्सुः ?
कर्णे मृगेन्द्रं ननु को जिघृक्षुः ? ।
जाज्वल्यमाने मम कोपवह्ना-
वद्याहुतिः कः कृपणोऽत्र भावी ॥ ७ ॥
कोऽयं वराकः शतकोटिकोटि-
दीप्रप्रदीपे भविता पतङ्गः ।
योऽचालयद् मूढमतिर्मदान्धो
मृगेन्द्रपीठं ननु मामकीनम् ॥ ८ ॥
विपक्षपक्षक्षयबद्धकक्षं
विद्युल्लतानामिव संचयं तत् ।
स्फुरत्स्फुलिङ्गं कुलिसं करालं
ध्यात्वेति यावत् स जिघृक्षति स्म ॥ ९ ॥
सेनापतिस्तावदमुं प्रणम्य
मौलौ निबद्धाञ्जलिरित्युवाच ।
प्रवर्तमाने मयि सेवकेऽस्मिन्
नाथैष ते किंविषयः प्रयासः ? ॥ १० ॥
अष्टाभिः कुलकम्

स्वस्वामिनं सेवकसाध्यकार्ये
प्रवर्तमानं तु निरुद्यमो यः ।
उर्ध्वः स्थितः पश्यति कातराक्षो
भृत्येन तेन किं विधेयमीश ! ॥ ११ ॥
यस्योपरि स्वामिपदा नु रुष्टाः
निदिश्यतां नाथ ! स सेवकाय ।
यथाऽचिरादेव तव प्रसादाद्

दिक्पालपूजां विदधामि तेन ॥ १२ ॥
सेनाधिपेनेत्युदितः क्षणं स
योगीव तस्थे स्थिरचित्तवृत्तिः ।
ततः प्रयुक्तावधिरुग्रधन्वा
जन्म प्रभोः प्रैक्षत पूजनीयम् ॥ १३ ॥
सुदुःसहोऽपि त्रिदशाधिपस्य
क्रोधः शशाम प्रभुदर्शनेन ।
पीयूषपानेन यथा ज्वरार्त्तिः
पयोदसेकेन यथा दवाग्निः ॥ १४ ॥
मोहादवज्ञा विहिता तवार्य !
क्षमस्व मेऽस्मादपराधमेकम् ।
भवन्तमन्यं च विराध्य यस्मा-
त्त्वामेव सत्त्वाः शरणं प्रपन्नाः ॥ १५ ॥
गृणन्निती‌न्द्रो निजदुष्कृतं त-
च्चकार मिथ्या प्रभुसाक्षिकं सः ।
निन्दन् स्वपापं गुरुपादमूले
मुक्तो भवेत् तेन यतः शरीरी ॥ १६ ॥ युग्मम्.
ससम्भ्रमोऽथो दधिपाण्डुकीर्ति-
र्मृगेन्द्रपीठादुदतिष्ठदिन्द्रः ।
अमन्दचन्द्रातपदर्शनीयः
प्राचीनशैलादिव शीतभानुः ॥ १७ ॥
दृष्टिं ददाना सकलासु दिक्षु
किमेतदित्याकुलितं ब्रुवाणा ।
उत्थानतो देवपतेरकस्मात्

१ चन्द्रातपः-चन्द्रिका।

सर्वाऽपि चुक्षोभ सभा सुधर्मा ॥ १८ ॥

ततश्च सप्ताष्टपदानि शक्र-
स्तीर्थंकरस्याभिमुखं चचाल ।
विलोकिते पूज्यपदारविन्दे
विवेकिनां युज्यत एवमेव ॥ १९ ॥

जगत्त्रयीनाथमदृष्टपूर्वी
नन्तास्म्यहं जम्भजितोऽपि पूर्वम् ।
इतीव हारः प्रचचाल सारोऽ-
भिसर्पतोऽमुष्य हृदग्रलग्नः ॥ २० ॥

वामैककर्णाभरणांशुजाल-
स्यूतोत्तरासङ्गविभूषितांसः ।
संज्ञुर्जिनेन्द्रं विधिना प्रणम्य
प्रचक्रमे स्तोतुमितीन्द्र एषः ॥ २१ ॥

तुभ्यं नमः प्रणमदिन्द्रशिरःकिरीट-
ज्योतिर्मरन्दमधुरक्रमपद्म ! देव ! ।
तुभ्यं नमो मथितदुग्धपयोधिसान्द्र-
स्वच्छोर्मिनिर्मलतरैः स्वगुणैरगाध ! ॥ २२ ॥

ज्योतिर्भरापहतसूतिगृहान्तरिक्ष-
मध्योल्लसद्गृहमणिग्रहपूगतेजाः ।
यत्रोदियाय सवितेव भवान् जिनेन्द्र !
श्लाघ्यः स यादवकुलोदयशैल एषः ॥ २३ ॥

इत्यादि संस्तुत्य जिनं सुरेन्द्रो
मृगेन्द्रपीठे निषसाद पश्चात् ।

---

१ शक्रात् । २ अंसः स्कन्धः । ३ संहतजानुकः, चैत्यवन्दनासन इत्यर्थः । ४ गृहमणयो दीपाः ।

घण्टां सुघोषां लघु ताडयेति
पदातिनाथाय समादिदेश ॥ २४ ॥
आपूरयन्तीं त्रिदिवं निनादै-
र्घण्टां स तां वादयति स्म देवः ।
स्नात्रं प्रभोर्ज्ञापयितुं सुरेभ्यः
प्रोच्चैरकार्षीदिति घोषणां च ॥ २६ ॥
ब्रवीमि किञ्चित् त्रिदशाः प्रधानाः !
भोः संशृणुध्वं विहितावधानाः ।
जन्माभिषेकं जिनपस्य कर्तुं
युष्मान् समाकारयतीन्द्र एषः ॥ २७ ॥
श्रोत्राक्ष[1]रन्ध्रेषु तदीयवाक्या-
मृतप्रपाताद् द्युसदः समस्ताः ।
रोमोद्गमैरुच्छ्वसिताः समन्तात्
कदम्बवृक्षा इव मेघसिक्ताः ॥ २८ ॥
सुस्निग्धपारि[2]प्लवलोचनाभिः
समीक्ष्यमाणोऽथ सुराङ्गनाभिः ।
विमानमारुह्य हरिः सतन्त्रो
जन्माभिषेकाय विभोः प्रतस्थे ॥ २९ ॥
तमन्वगच्छन् परिवारभाजः
सामानिकाद्या द्युसदः समस्ताः ।
भानुं मयूखा इव भानवीयाः
स्तम्बेरमौघा इव यूथनाथम् ॥ ३० ॥
विचित्रवर्णा मरुतां प्रचेलु-
र्विमानपूगा गगनाङ्गणेऽथ ।

---

१ अक्षमिन्द्रियम् । २ पारिप्लवं चञ्चलम् ।

पयोमुचां भाद्रपदोन्नतानां
सायंतनानां श्रियमाहरन्तः ॥ ३१ ॥

कीर्णांशुजालैः कमनीयशोभै-
रतिप्रमाणैर्द्युसदां विमानैः ।
रोलेम्बनीलच्छवि खं तदानीं
लेभे श्रियं पुष्पितकाननस्य ॥ ३२ ॥

गत्वा नृलोकेऽथ दशार्हधाम
ददौ शिवायै परिवारभाजे ।
विद्यामवस्वापनिकां तुराषाड्
रात्रौ नलिन्या इव शीतरश्मिः ॥ ३३ ॥

निवेश्य तत्र प्रतिरूपमेक-
मादाय चिन्तामणिवज्जिनेन्द्रम् ।
शीघ्रं ततो दस्युरिवामरेन्द्र-
स्तं मेरुशैलं प्रति संचचार ॥ ३४ ॥

अनर्घ्यरत्नप्रकरप्रसर्प-
त्प्रभाकरध्वस्ततमःप्रतानः ।
यो भाति जाम्बूनददृष्टकायः
क्ष्माङ्गनाया इव मौलिरत्नम् ॥ ३५ ॥

ससौरभाः पूग-लवंगदारुणा
गुहा यदीया अभुजङ्गदारुणा ।
विलोक्य का मोहनपण्डिता वरं
नामोहयद्भूषणमण्डिता वरम् ॥ ३६ ॥

उपत्यकायां प्रतिभाति यस्य

---

१ रोलम्बो भ्रमरः । २ इन्द्रः । ३ क्ष्मा पृथ्वी । ४ मोहनं सम्भोगः । ५ पतिम् ।

वनं घनं कोकिलकण्ठकालम् ।
कटीप्रदेशादिव नीलमस्य
स्रस्तं पृथिव्यां परिधानवस्त्रम् ॥ ३७ ॥
इमं प्रिये ! श्यामलतालशालं[1]
नीपं च पश्यामलतारपुष्पम् ।
इतो वनं श्याम-लताभिरामं
वापीश्च दृश्या मलतापहर्त्रीः ॥ ३८ ॥
एनोमलक्षालनपावनाम्भः
सनातनं चैत्यमिदं जिनानाम् ।
प्राणप्रिये ! पश्य फलं गृहाण
स्वनेत्रयोरायतयोर्युगस्य ॥ ३९ ॥
प्राणप्रियाया इति दर्शयन्तो
नवं नवं वस्तु सुभद्रशाले ।
विद्याधरा यस्य वने भ्रमन्ति
नाम्ना प्रतीते किल भद्रशाले ॥ ४० ॥
त्रिभिः कुलकम् ।
सश्रीककल्पद्रुपरम्परं[2] परं
यस्मिन् वनं कोविदनन्दनन्दनम्[3] ।
दृष्ट्वा स्वकान्तं सहसाऽऽह सा हसा-
नना पुरोचे विनयान्नयान्न या ॥ ४१ ॥
उत्तुङ्गशाश्वतजिनायतनेषु नृत्य-
द्देवाङ्गनाचरणनूपुरसान्द्रनादैः ।

---

१ तालशालो वृक्षः । । २ सश्रीकाणा कल्पद्रूणां परम्परा यत्र तत् । ३ कोविदान् प्राज्ञान् नन्दयति तथाविध नन्दनं तन्नामकं वनं यत्र ।

आयातचारणमुनीन् शमसौम्यमूर्तीन्
यः[1] पृच्छतीव सुखसंयमकिंवदन्तीम् ॥ ४२ ॥
कल्याणकल्याणनिबद्धभूमिः[2]
कान्तारकान्ताऽरणिभिन्नसानुः
पानीयपानीयनदाभिरामः[3]
संतानसंतानविवर्धको[4] यः ॥ ४३ ॥
जलानताभ्रो यदुपत्यकायां
गम्भीरमुच्चैर्निनदन् पयोदः ।
सर्वेषु शैलेषु वसुन्धराया-
मस्यैव साम्राज्यमिव प्रवक्ति ॥ ४४ ॥
सुरा रतिं यत्र तु कामयन्ते
रन्तुं च पत्न्या सह कामयन्ते ।
चैत्यानि बिम्बावलिमानवन्ति
जैनानि नन्तॄन् सशमानवन्ति ॥ ४५ ॥
यद्गण्डशैलेषु विशालगण्डाः
सार्धं स्वकान्तैरुपविश्य कान्तम् ।
गायन्त्यलं किन्नरचञ्चलाक्ष्यो[5]
यासां पुरः किं नरचञ्चलाक्ष्यः ? ॥ ४६ ॥
वनानि यस्मिन् विविधद्रुमाणि
प्रवालजालैर्जितविद्रुमाणि[6][7] ।
पक्वाम्रराजीफलपिञ्जराणि

---

१ मेरुरित्यर्थः । २ कल्याणा-शुभा, कल्याणेन हेम्ना च निबद्धा भूमिर्यत्र सः । ३ पेयं जलं येषु तथाभूतैर्नदैर्मनोहर इत्यर्थः । ४ संतानानां तदाख्यकल्पवृक्षाणां सन्तानं परम्परां विवर्धयति यः सः । ५ किन्नरस्त्रियः । ६ अभिनवपल्लवसमूहैः । ७ विद्रुमः प्रवालम् ।

देवीपदाब्जानतनिर्जराणि[1] ॥ ४७ ॥

पादान् यदीयान् कनकावदाता-
नुपासते किन्नरखेचराद्याः ।
उच्चस्य लक्ष्मीललिताम्बुजस्य
कुर्वीत को वा न हि पर्युपास्तिम् ? ॥ ४८ ॥

यदङ्गसंक्रान्ततनोः प्रियाया
भ्रान्त्या तदीयं प्रतिबिम्बरूपम् ।
पुष्पायुधान्धः[2] परिरब्धुकाम-
स्तत्प्रेयसीभिर्हसितो ललज्जे ॥ ४९ ॥

ज्योतिष्कचक्रोक्षकदम्बकेन
दिने रजन्यां च विगाह्यमाने ।
तमोऽन्नभृद्व्योमखले विशाले
दधाति यश्चान्तरकीलकत्वम् ॥ ५० ॥

जिनेन्द्रजन्माभिषवाम्बुपूतं
सर्वस्य लोकस्य च नाभिभूतम् ।
उच्छ्रायतो योजनलक्षमानं
सैद्धान्तिका यं प्रवदन्ति शैलम् ॥ ५१ ॥

गुरुणा च यत्र तरुणाऽगुरुणा[3]
वसुधा क्रियेत सुरभिर्वसुधा[4] ।
कमनातुरैति रमणैकमना
रमणी सुरस्य शुचिहारमणी ॥ ५२ ॥

भित्तिप्रतिज्वलदनेकमनोज्ञरत्न-
निर्यन्मयूखपटलीसततप्रकाशाः ।
द्वारेषु निर्मकरपुष्करिणीजलोर्म्मि-
मूर्च्छन्मरुन्मुषितयात्रिकगात्रघर्म्माः ॥ ५३ ॥

---

१ निर्जराः देवाः । २ पुष्पायुधः कामः । ३ अगरुनामकेन वृक्षेण । ४ वसूनि दधातीति वसुधा ।

पञ्चालिकाकलिततोरणदीप्तिकुम्भ-
सौवर्णदण्डमृदुकेतुमनोरमाभाः।
यत्रोल्लसन्मणिमयप्रतिमासनाथाः
केषां मनांसि न हरन्तितरां विहारा॑ः ॥ ५४ ॥युग्मम्
प्रविधूतसान्द्रतम-संतमसं
विविधाग्र्यरत्नविभया॑ विभया॑ः।
शिखरं सुपादप-रमं परम-
मुपभुञ्जतेऽस्य विबुधा विबुधाः ॥ ५५ ॥
यदीयचामीकरसानुभित्तौ
समुद्गताः शाड्वलकल्पवृक्षाः।
दूरात् समन्तादवलोक्यमाना
उत्पादयन्ति भ्रममैन्द्रनीलम् ॥ ५६ ॥
चारणैः शुभकथाविचारणै-
र्हारिभिः शुचिगुणैर्विहारिभिः।
योगिभिः परमचिन्नियोगिभि-
र्लीयतेऽत्र तदघं विलीयते ॥ ५७ ॥
एतस्य तस्यानुपमस्य मेरो-
रधित्य॑काल‌ङ्करणं सुरेन्द्र॑ः।
भजन् जिनं पञ्चभिरात्मरूपैः
प्रापद् वनं पाण्डकनामधेयम् ॥ ५८ ॥
ज्योतिर्व्यन्तरदेवदानवगणैः सान्तःपुरैरावृतो
लज्जाकातरलोचनाभिरमरीभिर्वीक्ष्यमाणो मुदुः।
पूतात्माऽवततार तत्र परमां भक्तिं दधत् तीर्थपे
सौवर्णे किल पाण्डुकम्बलशिलापट्टेऽथ वास्तोष्पतिः॥५९॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिनाथचरिते महाकाव्ये
मेरुवर्णनो नाम पञ्चमः सर्गः

---

१ जिनभुवनानि । २ विभा कान्तिः । ३ भयरहिताः ।
४ अधित्यका अद्रेरूर्ध्वभूमिः । ५ इन्द्रः ।

# षष्ठः सर्गः

अथार्हतः स्नात्रकृते सुरेन्द्राः
परेऽपि सर्वे मिलिताः सुमेरोः ।
निवासहेतोर्दिवसावसाने
विहङ्गपूगा इव वासवृक्षे ॥ १ ॥
लावण्यपूञ्जं परिपीयमानं
विलोलनेत्रैरमराङ्गनाभिः ।
ततो निजाङ्के जिनपं निधाय
सौधर्मनाथो निषसाद पीठे ॥ २ ॥
प्रभोः प्रभा नीलपयोजकल्पा
शक्रांशुपूरच्छुरिता बभासे ।
प्रत्यग्रकश्मीरजयूषमिश्रा
कालोदधेर्वीचिपरम्परेव ॥ ३ ॥
प्रवर्तमानः सुरनायकाङ्के
जिनोऽतसीसूनसमानभानुः ।
विकस्वरे चम्पकपुष्पकोशे
प्रशस्यरोलम्बयुवेव रेजे ॥ ४ ॥
पुरन्दराङ्के परिवर्तमानो
विनीलकान्तिर्भगवांस्तदानीम् ।
समाश्रितक्ष्माधरमध्यसानो-
र्जिगायलक्ष्मीं गजबालकस्य ॥ ५ ॥
मृद्रूप्यजाम्बूनदरत्नकुम्भा-
न्नानौषधीमिश्रजलैः प्रपूर्य ।

---

१ नूतनकुङ्कुममुद्रादिरसयुतेत्यर्थः ।

स्नात्रं विधातुं जगदीश्वरस्य
मर्त्याः समस्ता उपतस्थिरेऽथ ॥ ६ ॥
वृन्दारकाणां व्यरुचत् करेषु
कुम्भाः सुधादीधितिमण्डलास्थाः ।
उन्निद्रहेमाम्बुजमध्यसंस्था
विशुद्धपक्षा इव राजहंसाः ॥ ७ ॥
तीर्थाहृतैः स्वच्छजलैर्भृतास्ते
कुम्भाश्चतुष्क्रोशमुखा विरेजुः ।
पीयूषकुण्डानि भुजङ्गलोकात्
स्नात्रं प्रभोः कर्तुमिवागतानि ॥ ८ ॥
अद्यास्मदीयं सफलं सुरत्व-
मद्याधिपत्यं चरितार्थमेतत् ।
तीर्णा वयं चाद्य भवाम्बुराशिं
चित्ताब्जकोशेष्विति भावयन्तः ॥ ९ ॥
समुच्छ्वसन्तः प्रमदातिरेकाद्
मघाम्बुसेकादिव नीप[1]कुञ्जाः ।
सञ्जायमानाङ्गदरत्नघर्ष
समन्ततो भक्तिरसात् पतन्तः ॥ १० ॥
अथ प्रशस्यायतबाहुशाखं
जगत्त्रयाभीप्सितदानशीलम् ।
सुरासुरेन्द्रा विधिना विधिज्ञाः
समभ्यषिञ्चन् जिनकल्पवृक्षम् ॥ ११ ॥
त्रिभिः कुलकम्.

स नाथशीर्षोपरि राजते स्म

---

१ नीपाः कदम्बवृक्षाः ।

पतन् घटेभ्यः पयसां समूहः ।
आकाशगङ्गासलिलप्रवाहो
द्रष्टुं जिनेन्द्रं निपतन्निवोत्कः[1] ॥ १२ ॥
जिनेन्द्रगात्रात् स्म पतन्ति पीठे
प्राक् तानि वारीणि ततोऽद्रिशृङ्गे ।
ततोऽपि निम्नं समुपेत्य तस्थु-
रुच्चा स्थितिर्वा क्व भवेज् जडानाम् ॥ १३ ॥
जिनाङ्गसंसर्गपवित्रमम्भः
सुरासुरेन्द्रैरपि तद् ववन्दे ।
गुणोत्तमानां विहिता हि सेवा
फलं जडेभ्योऽपि ददाति सद्यः ॥ १४ ॥
क्षीराम्बुधेः क्षीरलवा विलग्नाः
प्रभोरलक्ष्यन्त विनीलकाये ।
नक्षत्रपूगा इव देवमार्गे
मुक्ता इवानीलशिलोपरिष्टात् ॥ १५ ॥
दिव्यानि तूर्याणि सुराहतानि
रेणुस्तदानीं मधुरस्वराणि ।
आहन्यमाना अपि किं गभीराः
कदापि कुत्रापि खरं[2] रसन्ति ॥ १६ ॥
अभ्यर्च्य कर्पूर-कुरङ्गनाभि-
श्रीखण्ड-कृष्णाऽगुरु-कुङ्कुमाद्यैः ।
अपूपुजन् स्वर्गसदोऽथ नाथं
प्रसूनवस्त्राभरणैः प्रधानैः ॥ १७ ॥
विचित्रवर्णः स्पृहणीयशोभः

---

१ उत्सुक. । २ कर्कशम् ।

सुरासुरेन्द्रैर्विहितः सुगन्धिः ।
अङ्गेऽङ्गरागो रुरुचे तदीये
दिवीव साम्भोमुचि सान्ध्यरागः ॥ १८ ॥
वन्द्यौ पदौ यस्य पुरन्दराणां
तस्यापि नाथस्य शिरः समन्तात् ।
आरुह्य पुष्पावलयो हि तस्थुः
स्थानं पवित्राः क्व न वा लभन्ते ॥ १९ ॥
अत्यर्थमासीद् नयनाभिरामः
आबद्धदिव्याभरणो जिनेन्द्रः ।
अग्रेऽपि हंसः कमनीयमूर्ति-
र्हेमाम्बुजातैः किमुताप्तसङ्गः ॥ २० ॥
सुधारसस्नानमिवामृतांशौ
विश्वेशरूपे विगतोपमाने ।
दिव्यांशुकानां परिकल्पितोऽयं
किञ्चिद् विशेषं न पुपोष वेषः ॥ २१ ॥
सानन्दलज्जं मुहुरीक्षमाणा-
स्त्रिलोकनाथं ललनाः सुराणाम् ।
तदायतानामनिमेषभाजां
साफल्यमायुर्निजलोचनानाम् ॥ २२ ॥
अन्यान् समस्तान् विषयान् विहाय
सुरामराणां नयनाम्बुजानि ।
जिनेन्द्ररूपे युगपत् निपेतु-
र्भृङ्गा इवोत्फुल्लपयोजषण्डे ॥ २३ ॥
अथोल्लसच्चञ्चलकुण्डलांशु-
बाह्लीकसंलिप्तकपोलभित्तिः ।

१ वाल्हीकं हिङ्गु कुङ्कुमं वा ।

समश्रयं योजितपाणिपद्मः
स्तोतुं प्रवृत्तो भगवन्तमिन्द्रः ॥ २४ ॥
श्रियां निवासं प्रयतः प्रणम्य
प्रभो ! त्वदीयं चरणारविन्दम् ।
सेव्यं मुमुक्षूत्तमराजहंसै-
स्त्वां स्तोतुमिच्छामि जगत्प्रतीक्ष्य ! ॥ २५ ॥
गुणानुरूपं तव नाथ ! रूपं
सहस्रनेत्रोऽप्यलमीक्षितुं न ।
सहस्रजिह्वोपि गुणानुदारान्
वक्तुं प्रभूष्णुर्न हि तावकीनान् ॥ २६ ॥
तथापि नुन्नस्तव भक्तिसख्या
स्तोतुं गुणांस्ते स्पृहयालुरस्मि ।
किं प्रेरितो देव ! शिशुर्जनन्या
गिरा स्खलन्त्यापि न वक्ति नाम ? ॥ २७ ॥
तव स्तवेनात्र शरीरभाजां
गलन्ति कर्माणि पुराकृतानि ।
निदाघसूर्यातपतापितानि
हैमाचलानीव हिमस्थलानि ॥ २८ ॥
सर्वास्ववस्थास्वपि लोकनाथ !
भवान् प्रणूतो हरतेऽघजालम् ।
वृद्धोऽपि बालोऽपि युवापि सूर्यो
हिनस्त्यवश्यं हि तमःसमूहम् ॥ २९ ॥
अनन्यवृत्तिः स्मरणं त्वदीयं
जिनेन्द्र ! भक्त्या विदधाति योऽत्र ।

१ समर्थः ।

सिद्धिश्रिया वा त्रिदशश्रिया वा
वध्वेव कान्तः परिरभ्यते स्म ॥ ३० ॥
त्वं यत्र चित्ते वससि प्रवेशं
तत्रान्यदेवस्य ददासि नैव ।
विरोधमुक्तो विदितस्तथापि
तत्त्वं प्रभो ! वा महतामगम्यम् ॥ ३१ ॥
त्वदाज्ञयैवात्र जिनेन्द्र ! सिद्धाः
सिध्यन्ति सेत्स्यन्ति शरीरभाजः ।
पद्मानि बोधं रविरोचिषेवा-
लभन्त लप्स्यन्त इतो लभन्ते ॥ ३२ ॥
एके जिन ! त्वां प्रविहाय मूर्खाः
कान्तानुरक्तेषु सुरेषु रक्ताः ।
तेषां जडानामुचितं तदेतत्
तुल्या हि तुल्येषु रतिं लभन्ते ॥ ३३ ॥
अन्यैरजय्यो जिन ! मोहमल्लः
सम्मूलकाषं कषितस्त्वयैव ।
केनापि नो नैशमिहान्धकारं
निर्नाशितं सूर्यमृते परेण ॥ ३४ ॥
यद्यर्कदुग्धं शुचिगोरसस्य
प्राप्नोति साम्यं च विषं सुधायाः ।
देवान्तरं देव ! तदा त्वदीयां
तुलां दधाति त्रिजगत्प्रदीप ! ॥ ३५ ॥
तीर्थान्तरीया अपि नामभिन्नं
त्वामेव नाथाप्तममी वदन्ति ।
आप्तो हि सिद्धो भुवि वीतरागः

स तु त्वमेवासि चिदात्मरूप ! ॥ ३६ ॥

यस्मिंस्तव ज्ञानतरङ्गिणीशे
विश्वत्रयीयं शफरीव भाति ।
तस्मै त्वदीयाय गुणाय भर्तः !
नमोऽस्तु नित्यं परमात्मवेद्य ! ॥ ३७ ॥

एकान्ततः प्राणिहिता यथा ते
वाणी विभो ! नैव तथा परस्य ।
यादृक् स्वमाता सुतवत्सला स्यात्
सौम्याऽपि तादृग् न भवेद् विमाता ॥ ३८ ॥

देवासुराणां परिपूजनीय-
स्त्वत्पादचिन्तामणिरेष पूतः ।
केषां चिदेवासुमतां जिनेन्द्र !
पुण्यात्मनां दृग्विषयं समेति ॥ ३९ ॥

अद्य प्रलीनं मम कर्मजालं
भाग्यं जजागार मदीयमद्य ।
वशीकृता सिद्धिवधूर्मयाद्य
प्रभो ! त्वदीयाननदर्शनेन ॥ ४० ॥

अक्षीणलक्ष्मीकमिदं सदा ते
सौम्यं मुखं पार्थिप ! पश्यतां नः ।
चित्तेषु नूनं प्रतिभासतेऽयं
चन्द्रोऽत्रिचक्षुर्मल एव देव ! ॥ ४१ ॥

तेजोमयोऽयं मुखदर्पणस्ते
विभाति कश्चिद् भगवन्नपूर्वः ।

---

१ अत्रि –ऋषिविशेषः, तच्चक्षुस्समुद्भवो हि चन्द्र इति तन्त्रान्तरप्रसिद्धिः ।

यत्रापरेषां वदनानि नैव
प्रापुः कदा यत् प्रतिरूपभावम् ॥ ४२ ॥
तुभ्यं नमः केवलिपुङ्गवाय
तुभ्यं नमः पूरुषपुण्डरीक ! ।
तुभ्यं नमः संसृतिपारगाय
तुभ्यं नमः सेवकतारकाय ॥ ४३ ॥
आख्यातु लोकः किमपीह सार्व[1] !
देवस्त्वमेवेति मतिः परं मे ।
दृष्टे हि यस्मिंस्त्वयि तात्त्विकानां
हर्षाश्रु वर्षन्ति विलोचनानि ॥ ४४ ॥
सक्षिप्यते वाक् स्तवनात् त्वदीयाद्
नेयत्तया विश्वपते ! गुणानाम् ।
किन्तु श्रमाद् मुग्धतयाऽथवार्य !
स्तुत्वा व्यरंसीदिति देवराजः ॥ ४५ ॥
किञ्चिद् विनम्राः स्तनकुम्भभारा-
च्छिरीषपुष्पादपि कोमलाङ्ग्यः ।
मदालसा मन्थुरदृष्टिपाता
लीलाविनिद्रार्धविलोचना याः ॥ ४६ ॥
वृता दुकूलेन सुकोमलेन
विलग्नकाञ्चीगुणजात्यरत्ना ।
विभाति यासां जघनस्थली सा
मनोभवस्यासनगब्दिकेव[2] ॥ ४७ ॥
नीलाश्मकर्णाभरणावलीढा
यासां कपोलाः कनकाभवर्णाः ।

---

१ हे सर्वज्ञ ! इत्यर्थ । २ गब्दिका 'गादी' इति भाषायाम् ।

जयन्ति शोभां शशलाञ्छनस्य
व्यक्ताष्टमीकैरवबान्धवस्य ॥ ४८ ॥
कन्दर्पवीरायुधघातदूनो
यासां कठोरस्तनतुम्बयुग्मम् ।
विकूणिताक्षो विनिवेश्य काये
मुक्तारतिः स्यात् किल देवलोकः ॥ ४९ ॥
सुमांसलाश्चम्पकपुष्पभासः
सौन्दर्यलावण्यरसेक्षुदण्डाः ।
जङ्घा यदीया मृदुला विरेजुः
शुण्डा इवानङ्गमतङ्गजस्य ॥ ५० ॥
याः पक्वबिम्बीफलसोदरोष्ठ्यो
वलित्रयीभूषितमध्यदेशाः ।
यासां बभुर्मञ्जुलबाहुवल्ल्य
इवाद्भुता मन्मथवीरभल्ल्यः ॥ ५१ ॥
रणत्तुलाकोटिरवाभिरामं
यासां पदद्वन्द्वमनिन्द्यशोभम् ।
जिगाय गुञ्जन्मधुपालिशालि
प्रबुध्यमानं कनकाम्बुजातम् ॥ ५२ ॥
तूर्येषु गम्भीरनिनादवत्सु
प्रताड्यमानेषु चतुर्विधेषु ।
गन्धर्वबालाभिरुदाननाभि-
र्गीतेषु साध्वालपितेषु सत्सु ॥ ५३ ॥
मृगेक्षणा नृत्यधुरंधुरीणाः

---

१ तुलाकोटिर्नूपुरम् ।

शक्राज्ञयाथाप्सरसो रसाढ्याः ।
संगीतकं देवकुमारमिश्राः
प्रारेभिरे ता पुरतो जिनस्य ॥ ५४ ॥ युग्मम् ।

का चिद् दृढानद्धदुकूलचोलाः
सुपीवरश्रोणिविलग्नवेणिः ।
तालानुरूपं परिनाटयन्ति
चक्रे क्षण चित्रगतानिवेन्द्रान् ॥ ५५ ॥

परिस्खलत्कङ्कणचारुहस्ता
का चित् स्तनीवी शिथिलां सलीलम् ।
दृढां बबन्ध स्मितगौरितास्या
मुद्रामिवानङ्गनरेश्वरस्य ॥ ५६ ॥

कटीतटे न्यस्य कराब्जमेकं
चेक्रीयमाणाभिनयान् परेण ।
सशब्दमञ्जीरपदा चचाल
द्रुतं द्रुतं का चिदनङ्गतन्त्रा ॥ ५७ ॥

काऽपि स्फुरत्कुण्डलकान्तिनीर-
प्रक्षालितोत्तेजितगण्डभित्तिः ।
व्याक्षिप्तचित्तं त्रिदशं युवानं
नृत्यन्तमग्रे स्खलितं जहास ॥ ५८ ॥

मुखश्रिया तर्जितचन्द्रबिम्बा
काञ्चीगुणालम्बिनितम्बबिम्बा ।
रम्याङ्गहारा सरलाङ्गयष्टि-
र्ननर्त का चित् सुविलासदृष्टिः ॥ ५९ ॥

---

२ अमरेण सहेत्यर्थः ।

तथा च देवाः परमप्रमोदाद्
नभस्तले केचिदुदप्लवन्त ।
केचिच्च चक्रुर्जयशब्दमुच्चैः
केचिद् गभीरं मृगराजनादम् ॥ ६० ॥

प्रभोः पुरस्तादिति चारुनाट्यं
नानाभिधेयं विधिना विधिज्ञाः ।
विधाय देवा विदधुः प्रमोदं
हृष्यन्ति सिद्धे हि न के स्वकार्ये ॥ ६१ ॥

द्वाविंशतीर्थाधिपतेः प्रकल्य
जन्माभिषेकोत्सवमेवमेते ।
चतुर्विधाः स्वर्गसदः सभार्याः
कृतार्थमात्मानममंसतोच्चैः ॥ ६२ ॥

पापं संहरते हिनस्ति दुरितं मुष्णाति रोगव्रजं
दौर्भाग्यं पिदधाति यच्छति शिवं लक्ष्मीं समाकर्षति ।
पुण्यं पाति रुणाद्धि दुर्गतिमुखं कष्टाच्च गोपायति
स्नानं तीर्थकृतः कृतं सुकृतिनां किं किं न कुर्याच्छुभम् ॥ ६३ ॥

त्रिदशगणपरीतो नायको निर्जराणां
जिनमथ जनयित्रीसन्निधौ स्थापयित्वा ।
विरचितजिनयात्रस्त्वष्टमद्वीपतीर्थे
दलितसकलपापः कल्पमाद्यं जगाम ॥ ६४ ॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये जन्माभिषेकवर्णनो नाम षष्ठः सर्गः ।



# सप्तमः सर्गः

वर्धस्व त्वं महाराज ! जातस्ते पुत्रपुङ्गवः ।
समुद्रविजयायाथ शशंसुरिति चेटिकाः ॥ १ ॥
तासां वाग्भिर्महीनाथः सुधासिक्त इवाभवत् ।
कस्य वा न भवेद्धर्षस्तादृशाङ्गजजन्मनि ॥ २ ॥
ततस्तुष्टमना राजा वस्त्राभरणकाञ्चनैः ।
वर्धापिकाः समस्तास्ताश्चक्रे कल्पलतोपमाः ॥ ३ ॥
प्रसादसुमुखः सोऽथ पाकशासनशासनः ।
नियोगिनः समाहूय आदिशत्येवान्वशादिति ॥ ४ ॥
यादवान्वयपूर्वाद्रावुदितः पुत्रभास्करः ।
सर्वैर्दत्तावधानैर्भो युष्माभिः श्रूयतामितः ॥ ५ ॥
यदस्ति बन्दिगोवृन्दं रुद्धं चारकवाटके ।
मुच्यतामधुना सर्वं तद् युष्माभिर्मदाज्ञया ॥ ६ ॥
पञ्जराम्भोजसंस्थास्तून् विहङ्गमधुव्रतान् ।
रवेरिवांशवो यूयं कुरुध्वं स्वैरगामिनः ॥ ७ ॥
अमारिघोषणां चापि घोषताऽखिलपत्तने ।
उत्पन्नो मे सुतो यस्माच्छरणं सर्वदेहिनाम् ॥८॥
विधद्ध्वं नगरं सर्वं सार-श्रीखण्डपाङ्किलम् ।
पञ्चवर्णैस्तथा पुष्पैर्दन्तुरं धूपधूसरम् ॥ ९ ॥
इत्यादि शासनं राज्ञः प्रतिश्रुत्य नियोगिनः ।
मुदिता निर्ययुः सौधात् काननादिव हस्तिनः॥१०॥
तत्क्षणादेव ते सर्वमकार्षुर्नृपशासनम् ।
वचसा भूभुजां सिद्धिर्मनसेव दिवौकसाम् ॥११॥

तदा सूर्यपुरं रेजे नृत्यत्तोरणकेतनम् ।
प्रभोः पुण्यप्रभावेन दिवः खण्डमिव च्युतम् ॥१२॥
बभौ राज्ञः सभास्थानं नानाविच्छित्तिसुन्दरम् ।
प्रभोर्जन्ममहो द्रष्टुं स्वर्विमानमिवागतम् ॥ १३ ॥
स्निग्धयोषिज्जनोद्गीतैः कलैः धवलमङ्गलैः ।
न श्रूयते परः शब्दः कर्णयोः पतितोऽपि च ॥१४॥
अनेकैः स्वार्थमिच्छद्भिर्वनीपकैर्वनीपकैः ।
राजमार्गस्तदाकीर्णः खगैरिव फलद्रुमः ॥ १५ ॥
नृत्यहेतुर्मयूराणां निष्क्रनाम्बुदगर्जितः ।
तूर्यनादोऽतिगम्भीरो दिगन्तान् व्यानशे तदा ॥१६॥
अथ कुङ्कुम-कर्पूर-हरिचन्दनचर्चित ।
सुगन्धिसारताम्बूलरञ्जिताधरपल्लवः ॥ १७ ॥
हंसच्छदच्छविस्वच्छचारुचीनांशुकावृतः ।
हारार्ध-हार-केयूरमुख्यभूषणभूषितः ॥ १८ ॥
पूर्णेन्दुमण्डलाकारच्छत्रशोभितमस्तकः ।
वीज्यमानो महेलाभिश्चामरैर्मोहितामरैः ॥ १९ ॥
मङ्गलपाठकश्रेष्ठैः स्तूयमानः पदे पदे ।
समस्तमन्त्रिसामन्तपुरोहितसमन्वितः ॥ २० ॥
राज्यलक्ष्मीसमाश्लिष्टः श्रीदशार्हमहीपतिः ।
सिंहासनमलंचक्रे पुरन्दर इवापरः ॥ २१ ॥ पञ्चभिः कुलकम्.
श्रेष्ठिमण्डलभूपालप्रधानपुरुषैः कृतम् ।
प्रणामं जगृहे सोऽथ प्रतिपत्तिपुरस्सरम् ॥ २२ ॥

---

१ याचकभूपैः । २ स्त्रीभिः ।

नटैर्नाट्यमथारेभे गायनैर्गीतमुत्तमम् ।
हल्लीसकं कुलस्त्रीभिर्बन्दिभिर्बिरुदावली ॥ २३ ॥
तव प्रतापदीपस्य कौशिका भुवनत्रयी ।
पतङ्गोऽभूत् पतङ्गस्तु दशा च त्रिदशाचलः ॥२४॥
विध्याप्यतेऽम्भसा वह्निः सूर्योऽब्देन पिधीयते ।
न केनाऽपि परं राजन्! त्वत्तेजः परिहीयते ॥२५॥
याः सौधसुखशय्यासु सुप्तास्त्वदरिनायिकाः ।
क्रुद्धे त्वयीश! ताः शैलशिलापट्टेषु शेरते ॥ २६ ॥
रणरात्रौ महीनाथ! चन्द्रहासं विलोक्यते ।
वियुज्यते स्वकान्ताभ्यश्चक्रवाकैरिवारिभिः ॥२७॥
क्राम्यन्ती बहुशो देशान् खेलन्तीश्वरमूर्धनि ।
आसमुद्रं विशश्राम तवाज्ञा भीष्मसूरिव ॥ २८ ॥
तव त्यागोद्धता भूप! मार्गणा गुणनोदिताः ।
भवते विजयारम्भं जल्पन्ति समराजिरे ॥ २९ ॥
शुभ्राऽपि शशिनः कान्तिर्हीयते रविसन्निधौ ।
न पुनर्नाथ! कुत्रापि त्वत्कीर्तिः पर्यहीयत ॥३०॥
भुञ्जन् राजन्! महीमेनां प्रथयन् न्यायमुत्तमम् ।
प्रजाजनकसंकाश! त्वं जीव शरदां शतम् ॥ ३१ ॥
इत्थं बन्दिजनोद्गीतां कीर्तिं मुक्ताफलोज्ज्वलाम् ।
स शुश्राव महीजानिः कर्णामृतच्छटोपमाम् ॥३२॥
नृपोऽथ पूरयामासार्थिनामाशां धनोत्करैः ।

---

१ मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीसक हि तत्' इति हैमः । २ वर्त्ति ' दिवेट ' इति भाषायाम् । ३ गङ्गेव । ४ बाणा याचकाश्च । ५ दिशो मनोरथाश्च ।

शक्र-यमा-र्णवावास-कुबेराणां यशोभरैः ॥ ३३ ॥
प्रार्थनामर्थिनामर्थैं साफल्यं लम्भयन् नृप ।
द्वादशाहीं व्यधादुच्चैः सूनोर्जन्ममहोत्सवम् ॥३४॥

अथामन्त्र्य निजावासे राजा यादवपुङ्गवान् ।
भोजं भोजं यथायुक्ति सच्चकार सगौरवम् ॥ ३५ ॥
गर्भस्थिते जगन्नाथे जनयित्री यदैक्षत ।
रिष्टरत्नमयं स्वप्ने चक्रनेमिं विभास्वरम् ॥ ३६ ॥
ततः स्वप्नानुसारेण प्राग् नन्यपश्चिमादिवत् ।
अरिष्टनेमिरित्याख्यां चक्रतुः पितरौ प्रभोः ॥ ३७ ॥
यदुकुलकमलार्कश्चन्द्रशालान्तराले
विविधविबुधधात्रीमातृभिर्लाल्यमानः ।
ससलिलवनभूमौ मालिकैः पाल्यमानः
शुभतरुरिव लग्नो वर्धितुं विश्वनाथः ॥ ३८ ॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये भगवज्जन्मोत्सववर्णनो नाम सप्तमः सर्गः



---

१ अर्णवावास.—वरुण. । २ व्याप्तौ द्वितीया

# अष्टमः सर्गः

अथ समं पितृबन्धुमनोरथैः
प्रववृधे भगवान् पितृसद्मनि ।
अभिमतार्प्यकृतामप्रमुखैर्गुणैः
सुरगिराविव बालसुरद्रुमः ॥ १ ॥
मरकताश्मदलैरिव निर्मितं
परिनिबद्धमिवाञ्जनपुद्गलैः ।
अभिनवाम्बुधरैरिव वेष्टितं
प्रभुवपुः फलिनीद्युति दिद्युते ॥ २ ॥
सरसिजं परिहाय समाश्रयन्
भगवतश्चरणाम्बुरुहं श्रियः ।
परिचिते ननु सत्यपि सुन्दरे
किल जनोऽभिनवे रमतेऽखिलः ॥ ३ ॥
अतिकठोरतया परिघः पुन-
र्भुजगराजवपुर्विषवत्तया ।
न हि ययावुपमाविषय प्रभोः
सरलयोः शुभयोर्भुजदण्डयोः ॥ ४ ॥
परमसौम्यगुणो जनदृक्सुखोऽ-
तिशुचि भागवताननमानशे ।
इव मरीचिसमुच्चय उज्ज्वलः
सकलशीतलदीधितिमण्डलम् ॥ ५ ॥
शमसुधारसवीचिपरिप्लुते

१ फलिनी प्रियङ्गुः ।

लक्ष्मणिमाञ्जनमिश्रिततारके।
परितिरस्कृतपङ्कजसम्पदी
भगवतो नयने स्म विराजतः॥ ६॥
हरिमुखैर्यदुराजकुमारकैः
सह समानवयोभिरनिन्दितः।
जिनपतिः प्रचिखेल विमोहयन्
शुभवने भवनेऽपि च नागरान्॥ ७॥
समतिक्रम्य शनैरथ शैशवं
समुपलभ्य विभुर्नवयौवनम्।
परिपुपोष वपुः सुभगाकृति-
र्जगतो जगतो नयनामृतम्॥ ८॥
किमुत पालयितुं भुवमागतः
सुरपतिः किमु वा मदनोऽङ्गवान्।
अयमभूदिति वीक्ष्य जिनेश्वरं
जनतया नतया हृदि तर्कितम्॥ ९॥
अभवदस्य परार्थफलो गुणो
निपुणता जगतः प्रतिबोधकृत्।
अभिमता विभुताऽखिलयोगिनां
सुजनता जनतापहृतौ क्षमा॥ १०॥
अभिनवं वय ऋद्धिरनुत्तरा
परमरूपकला प्रभुताऽद्भुता।
परमभूद् न विकारपरं मनोऽ-
त्रभवतो भवतोयधिमोचिनः॥ ११॥

---

१ जनता—जनानां समूह।

जगति ते स्तवनीयपदाम्बुजा
वयसि ये तरुणेऽप्यविकारिणः ।
रयहृताः सरितो न पतन्ति केऽ-
पि सरलाः सरला[1] विरला द्रुमाः ॥ १२ ॥

अथ निषेवितुमेनमनेनसं[2]
विहितसौवतरुप्रसवोपदः[3] ।
ऋतुगणः प्रगुणीकृतसम्पदु-
च्चयततोऽयततोदयशालिनम् ॥ १३ ॥

अधरयन् क्रमतः शिशिरश्रियं
मलयमारुतपल्लवितांह्रिपः ।
ऋतुपतिः सुरभिर्[4] विपिनावना-
ववततार ततारवकोकिलः ॥ १४ ॥

विविधपल्लवपुष्पफलाकुला
श्रुतिसुखोन्मदनीडजकूजिता ।
समभवत् सकलाऽपि वनस्थली
सुमनसां मनसां रतिकारिणी ॥ १५ ॥

मधुरमञ्जरिरञ्जितरंरण-
द्भ्रमरबन्दिजनैरभिनन्दिता ।
हरति शाड्वलपुष्पितचम्पकै-
र्न सह का सहकारलता मनः ? ॥ १६ ॥

कुसुममौक्तिकभासितदिग्मुखः
परिलसद्भ्रमरेन्द्रमणिप्रभः ।
किसलयैररुणो विपिनश्रियां
स तिलकः तिलकश्रियमातनोत् ॥ १७ ॥

---

१ देवदारवः २ निष्पापम् । ३ उपदा—उपहारः । ४ वसन्तः ।

रचयितुं ह्युचितामतिथिक्रियां
   पथिकमाह्वयतीव सगौरवम् ।
कुसुमिता फलिताऽऽम्रवणावली
   सुवयसां वयसां कलकूजितैः ॥ १८ ॥
गुपिलचूतलतागहनान्तरे
   सहचरीपरिरम्भणलालसम् ।
शुकमवेक्ष्य मुहुर्मुहुरस्मरन्
   न पथिकः पथि कः स्वकुटुम्बिनीम् ? ॥ १९ ॥
उपवनेषु समीक्ष्य विलासिनः
   स्वदयितांसनिवेशितदोर्लतान् ।
विरहिणो लुलुठुः स्मृतवल्लभा
   भुवि कलाविकला मदनाकुलाः ॥ २० ॥
वनितयाऽनितया रमणं कयाऽ-
   प्यमलया मलयाचलमारुतः ।
धुतलतातलतामरसोऽधिको
   न हि मतो हिमतो विषतोऽपि न ॥ २१ ॥
उपवने पवनेरितपादपे
   नवतरं बत रन्तुमनाः परा ।
सकरुणा करुणावचये प्रियं
   प्रियतमा यतमानमवारयत् ॥ २२ ॥
प्रियकरः कठिनस्तनकुम्भयो
   प्रियंकरः सरसार्तवपल्लवैः ।
प्रियतमां समवीजयदाकुलां

१ रमण नेता अनिता तया, रमणमप्राप्तयेत्यर्थः । २ तामरसं पङ्कजम् । ३ पतिपाणिरित्यर्थः ।

नवरतां वरतान्तलतागृहे ॥ २३ ॥
त्यज रुषं भज तोषममुं जनं
निपतितं पदयोरवलोकय ।
इति वदन् प्रणयी परिषस्वजे
मधुरसाधुरसान्वितयाऽन्यया ॥ २४ ॥ त्रिभिः कुलकम्.

सरसचारुतराधरपल्लवं
कमलिनीललनामुखपङ्कजम् ।
अलियुवा पिबति स्म विकस्वरं
सुमधुरं मधुरञ्जितमानसः ॥ २५ ॥

इव विलोकयितुं सुरभिश्रियं
विकचकुन्दलताकुसुमच्छलात् ।
उडुगणो निखिलः समवातर-
त्परिविहाय विहायं इलातलम् ॥ २६ ॥

रसभृताः सरसीषु विरेजिरे
कनकपङ्कजकोशसमुच्चयाः ।
स्नपयितुं जलदेवतया स्मरं
सकलसाः कलसा इव सज्जिताः ॥ २७ ॥

उपवने भवनेऽपि मधूत्सवे
प्रियसखा नवपल्लवशेखराः ।
अनुबभूवुरनारतमङ्गना
ललनदोलनदोर्ग्रहजं सुखम् ॥ २८ ॥

विरचयन् लघिमानमलं निशः
प्रकटभावमियाय महीतले ।
तप ऋतुस्तिरयन् निजसम्पदा

१ आकाशम् । २ सकला सा-लक्ष्मीर्यत्र ते । ३ कुम्भाः ।

समधुना मधुना जनितां श्रियम् ॥ २९ ॥
अविकलानि फलानि महीरुहां
परिपपाच तपः तपनांशुभिः ।
घटचयाननलैरिव कुम्भकृत्
शिवतरान् बत रागमनोहरान् ? ॥ ३० ॥
सुरभिपङ्कजराजिपतद्रजः-
कणकरम्बितवारिजलाशये ।
युवजनः प्रचिखेल तपे रसा-
दवलया वलैयान्वितहस्तया ॥ ३१ ॥
प्रियतमाधरबिम्बमिव प्रियो
मधुकरो लिलिहे मधुरं तपे ।
विकचपाटलपुष्पकदम्बकं
नवमरैन्दमरं दधदुज्ज्वलम् ॥ ३२ ॥
अजनि किं न तपेऽध्वगदुःखकृत्
खरदिवाकरतप्तरजश्चयः ।
ज्वलितवह्निकणप्रतिमोऽनिल-
श्चुतपलाशपलाशमुखा द्रुमाः ॥ ३३ ॥
जलमुचा पटलैर्जलवर्षिभि-
र्जनितमुष्णरुचा ग्लपयन् क्लमम् ।
अथ समाविरभूद् जलदागमो
नवकदम्बकदम्बकवर्धकः ॥ ३४ ॥
स्मितमणीबककेसररेणुभि-
र्दिगबलावदनानि विभूषयन् ।
अलिकुलं मधुलोलमखेदयद्

१ चैत्रेण । २ बवयोरैक्याद् वलयं कङ्कणम् । ३ नव्यपुष्परसम् ।

विचकलश्च कलः पवनाकुलः ॥ ३५ ॥
सुखयति स्म न कं तपतपाहृज्
जलदकालभवः शिशिरानिलः ।
परिवहन् नवकाञ्चनकेतकी-
शुभरजोभरजोज्ज्वलसौरभम् ॥ ३६ ॥
स्मरपतेः पटहानिव वारिदान्
निनदतोऽथ निशम्य विलासिनः ।
समदना न्यपतन् नवकामिनी-
चरणयो रणयोगविदोऽपि हि ॥ ३७ ॥
जयति काऽपि हि शक्तिरनीदृशी
कपटिनोऽस्य मनोभवयोगिनः ।
पटुहृषीकमना अपि यद्वशा
न हि शृणोति न पश्यति वेत्ति नो ॥ ३८ ॥
क्षरदभ्रजला कलगर्जिता
सचपला[1] चपलानिलनोदिता ।
दिवि चचाल नवाम्बुदमण्डली
गजघटेव मनोभवभूपतेः ॥ ३९ ॥
रविरमलं[2] विमलं रचयन्नथो
सकमलं कमलं परिपूतयन् ।
सुखयितुं किल नाथमुपागतो
धवलरुग् जलदो जलदात्यये ॥ ४० ॥
समधुपाः स्मितपङ्कजपङ्क्तयो
रुरुचिरे रुचिरेषु सरःस्वथ ।
नवशरच्छ्रियमीक्षितुमातनो-

१ सविद्युत्का । २ अलमत्यर्थम् ।

दिव दृशः शतधा जलदेवता ॥ ४१ ॥
आपः प्रसेदुः कलमा विपेचुः
हंसाश्चुकूजुर्जहसुः कजानि ।
सम्भूय सानन्दमिवावतेरुः
शरद्गुणाः सर्वजलाशयेषु ॥ ४२ ॥
रसविमुक्तविलोलपयोधरा
हसितकाशलसत्पलिताङ्किता ।
क्षरितपक्त्रिमशालिकणाद्विजा
जयति काऽपि शरज्जरती क्षितौ ॥ ४३ ॥
मदोत्कटा विदार्य भूतलं वृषाः
क्षिपन्ति यत्र मस्तके रजो निजे ।
अयुक्तयुक्तकृत्यसंविचारणां
विदन्ति किं कदा मदान्धबुद्धयः ? ॥ ४४ ॥
विजहुरुद्धततां समयसम्पदो
जलधिगा शिखिनश्च घनात्यये ।
गतवतीष्टजने बलपुष्टिदे
भवति कस्य न दर्पघनच्युतिः ॥ ४५ ॥
अनारतत्यक्तजलौघपाण्डुभि-
र्व्याप्तां समूहैः परितः पयोमुचाम् ।
द्यां वीक्षमाणोऽत्र जहर्ष को न हि
श्रीखण्डलिप्ताङ्गलतामिवाङ्गनां ॥ ४६ ॥
कम्पयन्नथ दरिद्रकुलान्यु-
द्दण्डवात इव पुष्पवनानि ।
वह्निकोणपरिवर्तितभास्व-

१ कमलानि । २ द्विजा दन्ता । ३ स्मयो दर्प ।

न्मण्डलो हिममयः समयोऽयात् ॥ ४७ ॥

उपययौ शनकैरिह लाघवं
दिनगणः खलराग इवानिशम् ।
ववृधिरे च तुषारसमृद्धयो-
नुसमयं सुजनप्रणया इव ॥ ४८ ॥

संत्यज्य विलासिनीजनो
मुक्ताफलमालां समुज्ज्वलाम् ।
भेजे दहनं प्रदाहकं
काले रिपुमप्याश्रयेत् सुधीः ॥ ४९ ॥

इह भर्तृभिर्विरहिताङ्गनामनो-
वनदीपितप्रचुरकामपावकः ।
हिमपातदग्धजलजातकाननः
शिशिरो ययावशिशिरो गुणैरथ ॥ ५० ॥

भृङ्गाः स्फुटत्काञ्चनपद्मखण्डे
स्वैरं पपुर्ये सुरभौ मरन्दम् ।
माघे करीरेषु चरन्ति तेऽपि
गतिर्विधातुर्विषमेति शङ्के ॥ ५१ ॥

मलयजादिविलेपननीररुद्-
शयनमाल्यविधावकृतादराः ।
हिमबलेन तथाप्यहरंस्तरां
युवतयो बत योगिमनांस्यपि ॥ ५२ ॥

समकेतकचम्पककुन्दलता-
जलजातवने हिमपातहते ।
भ्रमरो विचचार सरीषवने
सकलोऽप्युदितं श्रयतीह जनः ॥ ५३ ॥

ऋतुगणे सुभगेऽपि किलेदृशे
न च कदा चकमे विषयान् विभुः ।
मृगपतिर्निवसन् विपिनान्तरेऽ-
पि सरसानि फलानि कदाऽत्ति किम् ? ॥ ५४ ॥
अमोघशस्त्रं विषमास्त्रवीरः
प्रायुङ्क्त यद् यद् जगतां प्रतीक्ष्ये ।
बभूव तत् तद् विगतप्रतापं
क्षीराम्बुराशाविव वासवास्त्रम् ॥ ५५ ॥
खेलन् नाथोऽथान्यदा शस्त्रशालां
प्राप्तः शङ्खं वीक्ष्य नारायणस्य ।
आददाचैनं पाणिना रक्तभासा
शृङ्गेणेव प्राग्गिरिश्चन्द्रबिम्बम् ॥ ५६ ॥
त्रिजगत्प्रभुपाणिपङ्कजस्थो
हिमपिण्डादपिपाण्डुरः स शङ्खः ।
प्रमुमोष विकस्वराम्बुजातो-
परिवर्तिष्णुमरालबालशोभाम् ॥ ५७ ॥
प्रमथ्यमानाम्बुधिनादधीरं
संव्यापयन्तं युगपद् दिगन्तान् ।
बद्धस्पृहं श्रीरमणस्य चेतो
भयेषु कुर्वन्तमसंस्तुतेषु ॥ ५८ ॥
क्षोणीभृतां गह्वरमण्डलोत्थैः
प्राप्तप्रकर्षं प्रतिशब्दसंघैः
विश्वत्रयं शब्दमयं सृजन्त-
मेकार्णवं कालमिव क्षयाख्यम् ॥ ५९ ॥

---

१ अपरिचितेषु ।

पयोदनादं परिशङ्कमाना
मयूरबाला अभिनर्तयन्तम् ।
ध्मातो जिनेन्द्रेण स पाञ्चजन्यो
ध्वनिं ससर्जेव हतो मृदङ्गः ॥ ६० ॥ त्रिभिः कुलकम्.

चकितेन मुरारिणा ततो
विपुलं नाथबलं बुभुत्सुना ।
जगदे भगवान् स सास्मितं
मम बाहुं नमयेति बान्धव ! ॥ ६१ ॥

हरिभुजं भगवानथ लीलया
कमलनालमिवानतिमानयत् ।
भवति तावदिभस्य करो दृढः
स्पृशति यावदमुं न मृगाधिपः ॥६२ ॥

अविलम्ब्य चतुर्भुजोऽथ दीर्घां
भुजवल्लीं भुवनैकनायकस्य ।
नमनाक्षम आसदत् सुपर्व-
द्रुमशाखाश्रितवानरस्य शोभाम् ॥ ६३ ॥

सकलराज्यमिदं कमलापते !
कुरु यथेष्टमशङ्कमनाकुलः ।
अलमपि स्पृहयालुरहं न तद्
निजगदे प्रभुणेति वृषाकपिः ॥ ६४ ॥

लक्ष्मीलावण्यलीलाकुलगृहललनाश्लेषमुक्ताभिलाषो
मन्वानस्तुच्छमेतद् विषयरससुखं तत्त्वतो दुःखरूपम् ।
भुञ्जानो ज्ञानतोषप्रशमरतिसुखं शाश्वतानन्दहेतुं
तस्थावित्थं जिनेशो निजपितृसदने यौवनस्थोऽपि सुस्थः ॥ ६५ ॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये
षड्ऋतुवर्णनो नामाष्टम सर्गः

---

१ शङ्ख. । २ कृष्ण. ।

# नवमः सर्गः

विभुं विभाव्य भोगार्हमपत्यस्नेहमोहितौ ।
प्रोचाते पितरावेवं कैटभारातिमन्यदा ॥ १ ॥
तथा विधीयतां वत्स ! यथा नेमिकुमारकः ।
गृह्णात्येष वधूपाणिं संकेतं भोगसम्पदः ॥ २ ॥
तमर्थमथ पत्नीभ्यः सर्वाभ्यो हरिरादिशत्।
ईदृशेषु हि कार्येषु प्रायस्तासां प्रवीणता ॥ ३ ॥
सत्यभामादयोऽन्येद्युर्देवकीसूनुवल्लभाः ।
नेमिं व्यजिज्ञपन्नेवं स्नेहसारं पटूक्तिभिः ॥ ४ ॥
नेमे ! रम्या गलत्येषा यौवनश्रीः क्षणे क्षणे ।
निशा शेषे यथा चन्द्रबिम्बदीधितिमण्डलीम् ॥ ५ ॥
तद् भो भोगाननभुञ्जानः पावनं यौवनं ह्यदः ।
किं मुधा गमयस्येवं तद् वनस्वापतेयवत् ? ॥ ६ ॥
विश्वातिशायि ते रूपं सौभाग्यं विश्ववल्लभम् ।
चातुर्यं वर्णनातीतं लावण्यमुपमातिगम् ॥ ७ ॥
प्रार्थनीयं प्रभुत्वं ते गीर्वाणस्वामिनामपि ।
महिमा तावको नेमे ! देवानामप्यगोचरः ॥ ८ ॥
बहुना किं कुमारेन्द्र ! जगदाल्हादकारकैः ।
त्वमाश्रितो गुणैः सर्वैर्नभोदेश इवोडुभिः ॥ ९ ॥ त्रिभिः कुलकम्.
परमैश्वर्यसौन्दर्यरूपमुख्या गुणा नृणाम् ।
ऋते कान्तां न शोभन्ते निशां विनेन्दुधामवत् ॥ १० ॥
तद् देवर ! त्रपां मुञ्च रतिविघ्नविधायिनीम् ।
फलं यौवनवृक्षस्य द्राग् गृहाण विचक्षण ! ॥ ११ ॥

विवाहय कुमारेन्द्र ! बालाश्चञ्चललोचनाः ।
भुङ्क्ष्व भोगान् समं ताभिरप्सराभिरिवामरः ॥ १२ ॥
रूपसौन्दर्यसम्पन्नां शीलालङ्कारधारिणीम् ।
झरल्लावण्यपीयूषसान्द्रपीनपयोधराम् ॥ १३ ॥
हेमाब्जगर्भगौराङ्गीं मृगाक्षीं कुलबालिकाम् ।
ये नोपभुञ्जते नूनं वेधसा वञ्चिता हि ते ॥ १४ ॥ युग्मम्-
संसारे सारभूतो यः किलायं प्रमदाजनः ।
सोऽसारचेत्तवाभाति गर्दभस्थगणोपमः ॥ १५ ॥
एवं तर्हि वयं नेमे ! न विद्मस्तावकीं धियम् ।
अथवा वर्तसे नूनं सिद्धिश्रीसङ्गमोत्सुकः ॥ १६ ॥ युग्मम्-
सौख्यमेवोपभोक्तव्यं मोक्षेऽपि ननु यादव ! ।
लभ्यते चेत् तदत्रैव तत्किं क्षूणं वदानघ ! ॥ १७ ॥
श्रुत्वेति भ्रातृजायानां विवेकविकला गिरः ।
किञ्चिद्विहस्य विश्वेशो निपुणं प्रोचिवानिति ॥१८॥
अये ! तत्त्वं न जानीथ वराक्यो मुग्धबुद्धयः ।
कुत्र तत्त्वावबोधो वा रागान्धानां शरीरिणाम् ॥ १९ ॥
अज्ञातपरमार्थो हि स्तौति वैषयिकं सुखम् ।
पक्वं निम्बफलं मिष्टं वक्त्यदृष्टप्रियालुकः ॥ २० ॥
यत्किञ्चिद् येन वा दृष्टं स तदेव प्रशंसति।
निम्बमेव यतो मिष्टं मन्यते करभाङ्गना ॥ २१ ॥
मोदकः क्वौकशः क्वत्र क्व सर्पिः खण्डमोदकः ।
क्वेदं वैषयिकं सौख्यं क्व चिदानन्दजं सुखम् ॥२२॥
नामवर्णाविभेदेऽपि सुखयोरेतयोः किल ।
स्वादे महान् विशेषोऽस्ति गोस्नुही-क्षीरयोरिव ॥ २३ ॥
हितं धर्मौषधं हित्वा मूढाः कामज्वरार्दिताः ।

सुखप्रियमपथ्यं तु सेवन्ते ललनौषधम् ॥ २४ ॥
आत्मा तोषयितुं नैव शक्यो वैषयिकैः सुखैः ।
सलिलैरिव पाथोधिः काष्ठैरिव धनञ्जयः ॥ २५ ॥
अनन्तमक्षयं सौख्यं भुञ्जानो ब्रह्मसद्मनि ।
ज्योतिःस्वरूप एवायं तिष्ठत्यात्मा सनातनः ॥ २६ ॥
अतः परं न वक्तव्यं युष्माभिरीदृशं पुनः ।
अवाच्यं शिष्टलोकस्य ग्रामीणजनतोचितम् ॥ २७ ॥
स्वभावं मे न जानीथ वसन्त्योऽपि सदान्तिके ।
पाथोजस्य यथाऽऽमोदं भेकाः सहोषिता अपि॥ २८ ॥
प्रजावत्यः समस्तास्ता निशम्येति प्रभोर्वचः ।
एवं बभाषिरे भूयः सत्याभिः सरलोक्तिभिः ॥ २९ ॥
श्रीनेमे ! नरकोटीर ! जगत्पूज्य ! जिनेश्वर ! ।
यदुक्तं भवता सर्वं तदेव खलु तात्त्विकम् ॥ ३० ॥
जानीमश्च वयं पूज्य ! यदेते विषयास्तव ।
मानसे प्रतिभासन्ते निःस्वादास्तुषराशिवत् ॥ ३१ ॥
परं स्वपितरौ सर्वैर्बहुमान्यौ तनूद्भवैः ।
युष्मादृशैर्विशेषेण विचाराचारकोविदैः ॥ ३२ ॥
अविभाव्यात्मनः कष्टं पितॄन् प्रीणन्ति नन्दनाः ।
स्कन्धारोपितपित्रम्बः श्रवणोऽत्र निदर्शनम् ॥ ३३ ॥
किञ्च पित्रोः सुखायैव प्रवर्तन्ते सुनन्दनाः ।
सदा सिन्धोः प्रमोदाय चन्द्रो व्योमावगाहते ॥ ३४ ॥
भुवने निःस्पृहा एव परानुग्रहकाम्यया ।
प्रवर्तन्ते महात्मानो दाक्षिण्येन वशीकृताः ॥ ३५ ॥
अपि प्रमोदयन् विश्वं यथा कुमुदबान्धवः ।

---

१ भ्रातृपत्न्य. ।

प्रीणयत्यधिकं सौवान् कृत्वेति कुमुदाकरान् ॥ ३६ ॥
तथा त्वमपि विश्वेश ! जगदाल्हादकारकः ।
अतो विशेषतो वर्गं स्वं प्रीणयितुमर्हसि ॥ ३७ ॥ युग्मम्
किं वा भूयो वयं वच्मस्त्रिकालज्ञानवान् स्वयम् ।
भगवानेव जानीते लोकलोकोत्तरस्थितिम् ॥ ३८ ॥
अत्रान्तरे शिवाभ्येत्य बाहौ धृत्वा जगत्प्रभुम् ।
प्रोवाचेति बलिं यामि कुमार ! तव नेत्रयोः ॥ ३९ ॥
वत्स ! प्रसद्यतां सद्यो विवाहः प्रतिपद्यताम् ।
पूर्यन्तां नरकोटीर ! पितॄणां हि मनोरथाः ॥ ४० ॥
निस्स्पृहोऽपि जगन्नाथोऽथ पित्रोरुपरोधतः ।
प्रपेदे तद्वचः किञ्चिदलङ्घ्यवचनौ हि तौ ॥ ४२ ॥
ततः प्रमुदिताः सर्वे यादवाः सह बन्धुभिः ।
विशेषेण शिवा देवी समुद्रविजयस्तथा ॥ ४२ ॥
इतश्चाम्भोजतुल्याक्षो भोजराजाङ्गभूरभूत् ।
उग्रसेनो महीजानिरुग्रसेनासमन्वितः ॥ ४३ ॥
प्रतापयशसी येन शत्रूणां रणपर्वणि ।
ग्रस्येते परमस्थाम्ना चन्द्रार्काविव राहुणा ॥ ४४ ॥
करकृतकरबालाय प्रसाद्य यस्मै रणोत्थिताय ।
किल कर-बालाः करबालान् वितरन्ति विपक्षभूपालाः॥४५॥
प्रातः सामान्तभूपालैरुपदीकृतवारणाः ।
क्षरन्मदजलैर्यस्य सिञ्चत्यास्थानमण्डपम् ॥ ४६ ॥
आधारो दीनलोकानां शरण्यः शरणार्थिनाम् ।
यो निधिर्गुणरत्नानामारामः कीर्तिवीरुधाम् ॥ ४७ ॥
कोशो लक्ष्मीसरस्वत्योरालानः सत्त्वहस्तिनः ।

१ करवाल.–असि. । २ दण्ड–कुमारिका ।

मण्डपो नीतिवल्लीनां यः स्तम्भः कुलसद्मनाम् ॥ ४८ ॥
राजीमतीति नाम्नासीत् फुल्लराजीवलोचना ।
दुहिता तस्य भूपस्य जयन्तीव दिवस्पतेः ॥ ४९ ॥
करण्डी शीलरत्नस्य वापी लवणिमाम्भसः ।
वल्ली सौभाग्यकन्दस्य याऽवधी रूपसम्पदाम् ॥ ५० ॥
निष्कलङ्केन्दुलेखेव या मृदङ्गी मृणालवत् ।
स्पृहणीयाऽब्दमालेवं हरिणीव सुलोचना ॥ ५१ ॥
यस्या वक्त्रजितः शङ्के लाघवं प्राप्य चन्द्रमाः ।
तुलवद् वायुनोत्क्षिप्तो बम्भ्रमीति नमस्तले ॥ ५२ ॥
विचालालम्बिरोलम्बविनीलनलिनश्रियम् ।
जह्रे नेत्रयुगं यस्य मुग्धास्निग्धकनीनिकम् ॥ ५३ ॥
सलावण्यरसौ यस्याः स्तनकुम्भौ स्म राजतः ।
वक्षःस्थलं समुद्भिद्य कामकन्दाविवोत्थितौ ॥ ५४ ॥
बभावूरुयुगं यस्याः कदलीस्तम्भकोमलम् ।
आलान इव दुर्दन्तिमीनकेतनहास्तिनः ॥ ५५ ॥
शङ्के यस्याः पदद्वन्द्वसौन्दर्यश्रीपराजितम् ।
कमलं सेवतेऽरण्यमद्यापि भयवेपिरम् ॥ ५६ ॥
यस्या हि रूपसौन्दर्यनिर्जिता नाकिनायिकाः ।
प्रदर्शयन्ति नो नृणां स्वरूपं लज्जिता इव ॥ ५७॥
रूपप्रेमत्रपाधर्मप्रमुखैर्महिलागुणैः ।
या व्याप्ता विमलैः शस्यैश्चन्द्रलेखेव भानुभिः ॥ ५८ ॥
तां श्रीनेमिकुमाराय कुमारीसुकुमारिकाम् ।
उग्रसेनं ययाचेऽथ सबन्धुर्यादवाग्रणीः ॥ ५९ ॥
उग्रसेनोऽप्युवाचैवं हर्षविस्मेरलोचनः ।
आनन्दिता वयं तावदनया कथयाऽप्यहो ? ॥ ६० ॥

सतां तिष्ठतु सम्बन्धः कथापि सुखयत्यलम् ।
दूरे चन्द्रश्चकोराणां ज्योत्स्नैव कुरुते मुदम् ॥ ६१ ॥
सम्बन्धमन्तरा नौ भोः सम्बन्धोऽयं भवेद्यदि ।
तदा माधव ! मन्येऽहं क्षीरेयी खण्डमिश्रिता ॥ ६२ ॥
दत्ता मया कुमारीयं कुमारारिष्टनेमये ।
शिवः स्यादनयोर्योगो रोहिणीचन्द्रयोरिव ॥ ६३ ॥
जाते कान्तेऽथ सम्बन्धे सम्बन्धिनावुभावपि ।
प्रारेभाते निजं कार्यं जलबीजे इवाङ्कुरम् ॥ ६४ ॥

उपयामयोग्यमखिलं यदिष्यते ।
प्रगुणीकुरुध्वमधुनेह वस्तु तत् ।
इति भोजभूमिपतिरादिशद् मृदुः
सचिवान् निजान् प्रमदवारिवारिधिः ॥ ६५ ॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये
कन्यालाभवर्णनो नाम नवमः सर्गः



# दशमः सर्गः

सखीमुखेन्दोः प्रझरन्तमेनं
वृत्तान्तपीयूषरसं पिबन्ती ।
ततश्चकोरीव चकोरनेत्रा
न प्राप तृप्तिं नृपभोजपुत्री ॥ १ ॥
सत्यं ममाग्रे यदि न ब्रवीषि
मातुः पितुस्ते शपथोऽस्ति तर्हि ।
किं हास्यमेतत् ? किमु सूनृतं वा ?
ब्रूषे ? पप्रच्छेति मृदुः सखीं सा ॥ २ ॥
इतः समुद्रा-च्युत-ताल[1]लक्ष्मणां
चकार विज्ञप्तिममात्यमण्डली ।
एषा प्रशस्या नरलोकनायकाः !
सामग्र्यशेषोपयमस्य सूत्रिता ॥ ३ ॥
उत्सार्याशुचिपुद्गलान् पुरपथाः सिक्ताः सुगन्धोदकैः
कीर्णास्तत्र विचित्रचम्पकजपाजात्यादिपुष्पोत्कराः ।
कर्पूराऽगुरुधूपधूमपटलैर्व्याप्तं नभोमण्डलं
मुक्ता बन्दिजना अमी प्रददते नेमीश्वरायाशिषम् ॥४॥
सौवर्णाश्च मनोरमा मणिचिता उत्तम्भितास्तोरणाः ।
रम्भास्तम्भमनोहराः प्रगुणिता उच्चैस्तरा मण्डपाः
सन्मुक्ताफलहेमकन्दललसन्माणिक्यजालोज्ज्वला
बद्धास्तत्र विचित्रचित्रकलिताश्चन्द्रोदया मञ्जुलाः ॥ ५ ।
एषा किं भुवमागता सुरपुरी किं वाथ भोगावती

---

१ताललक्ष्मा-बलदेवः ।

लङ्का वा किमु काञ्चनी किमथवा यक्षेश्वराणां पुरी ।
आसन्नोपवनोन्नतद्रुमहिमच्छायाश्रितैरुन्मुखै-
रेवं पान्थजनैस्तदा किल हृदि श्रीद्वारिका तर्क्यते ॥ ६ ॥
एते वंशमहत्तरा हितकराः शृङ्गाररसारा इमे
मुग्धाः स्निग्धवधूजना अविकलं गायन्त्यलं मङ्गलम् ।
वर्तन्ते बहुहास्यकौतुकपरा मत्ताः कुमारा अमी
द्वारेऽमी निवसन्त्युपायनजुषः सामन्तभूमीभुजः ॥ ७ ॥
रङ्गद्घर्घरिकोल्वणा रणरणन्मञ्जीरसञ्जिक्रमा
एता नर्तनतत्पराः सुनयनास्तिष्ठन्ति वाराङ्गनाः ।
आयाता नव किन्नरस्वरधरा गन्धर्वसंघास्त्वमी
भेरीमर्दलतालवेणुपणवातोद्यावलीवादकाः ॥ ८ ॥
नेपथ्यं कलयन्नपूर्वरचनं शोभां परामावहन्
भूपालैः परितोऽन्वितो हरिहयो वृन्दारकौघैरिव ।
बिभ्रन् निर्मलमङ्गरागमतुलं व्यावृत्तरागोऽपि सन्
वीवाहाय जगत्प्रभुर्वररथारूढः प्रतस्थेऽथ सः ॥ ९ ॥
पुण्याढ्यं कमला यथा निजपतिं योषाः सुशीला यथा
सूत्रार्थं विशदा यथा विवृतयस्तारा यथा शीतगुम् ।
पुंसां कर्म यथा धियश्च हृदयं खानां[1] यथा वृत्तयः
सानन्दं कुलकोटयः किल यदूनामन्वगुस्तं तथा ॥ १० ॥
तदान्यकार्येषु पराङ्मुखाणां
द्रष्टुं जिनेन्द्रं भृशमुत्सुकानाम् ।
पुराङ्गनानां चललोचनानां
बभूवुरित्थं किल चेष्टितानि ॥ ११ ॥
का चिन्नवालक्तकालिप्तपादा

---

१ इन्द्रियाणाम्

जवाद् गवाक्षं प्रति संचरन्ति ।
अजीजनद् विभ्रममम्बुजानां
छायापदाब्जैर्मणिकुट्टिमेषु ॥ १२ ॥
का चित् करार्द्रप्रतिकर्मभङ्ग-
भयेन हित्वा पतदुत्तरीयम् ।
मञ्जीरवाचालपदारविन्दा
द्रुतं गवाक्षाभिमुखं चचाल ॥ १३ ॥
प्रभुं दिदृक्षुः सहसोत्थिता का-
प्यर्धाचिताया निजहारयष्टेः ।
मुक्ताफलैः स्थूलतरैर्गलद्भिः
पदे पदे भूमिमलंचकार ॥ १४ ॥
कस्याश्च वातायनसंस्थिताया
आस्वादनाय प्रगुणीकृतस्य ।
संचूर्णताम्बूललतादलस्य
तस्थौ मुखेऽर्धं च करे तथाऽर्धम् ॥ १५ ॥
परा प्रभो रूपमवेक्षमाणा
रसातिरेकादनिमेषदृष्टिः ।
सख्या ह्वयन्त्या अपि पार्श्वगायाः
शुश्राव शब्दं बधिरेव नैव ॥ १६ ॥
काप्यम्बुकुम्भं करपल्लवाभ्या-
माकर्षयन्त्युन्नतकन्धराक्षी ।
आकृष्टकोदण्डलतेव तस्थौ
स्त्रीणामहो दर्शनलोलुपत्वम् ॥ १७ ॥
पराऽञ्जयित्वा नयनाम्बुजात-

१ प्रतिकर्म-मण्डनम् । २ अर्धस्यूताया.

मेकं परस्याञ्जनहेतवेऽथ ।
शलाकया कज्जलमाददाना
शीघ्रं गवाक्षं प्रति निर्जगाम ॥ १८ ॥
का चित् सुवर्णालयजालकान्त-
र्दृष्ट्वा प्रभुं राजपथेऽवतीर्णम् ।
प्रल्हादकं चन्द्रमिवाभ्रमार्गे
संयोज्य पाणी प्रणनाम मूर्ध्ना ॥ १९ ॥
हले! प्रतीक्षस्व निमेषमेकं
यथाहमप्येमि पिधाय गेहम् ।
इत्थं वदन्तीं स्वसखीमुपेक्ष्य
पीठात् समुत्थाय दधाव का चित् ॥ २० ॥
काभिश्चिदावासगवाक्षभूमौ
मिथः स्वसंमर्दवशेन कामम् ।
हारच्युता मौक्तिकरत्नपूगा
मार्गेषु कीर्णा इव पुष्पपुञ्जाः ॥ २१ ॥
भोज्यं सुराणामपि दुर्लभं यत्
स्थाले विशाले परिवेषितं तत् ।
हित्वा परा द्वारमभिप्रतस्थे
चक्षुर्विलोलं खलु कामिनीनाम् ॥ २२ ॥
कस्तूरिका-कुङ्कुम-पत्रवल्लीः
कपोलभित्तौ परिकल्पयन्ती ।
प्रसाधिकाया अपसार्य हस्तौ
दधाव का चित् सहसा गवाक्षम् ॥ २३ ॥
गवाक्षभूमौ स्थितकामिनीना

---

१ दास्याः ।

विलोक्य वक्त्राणि तदावनिस्थाः ।
संशेरते किं गगनप्रदेशे
सुधाकराणामुदिताः सहस्राः ॥ २४ ॥
संश्लाघ्यमानः सुरसुन्दरीभि-
संसेव्यमानो नरदेवलोकैः ।
ततः प्रभुश्छत्रनिवारितोष्मा
भोजस्य गेहं समया जगाम ॥ २५ ॥
अत्रान्तरे राजिमती सखीभि-
रेवं जजल्पे सखि! पश्य पश्य ।
वरोऽमरीणामपि दुर्लभोऽयं
नेमिः समागात् तव भाग्यकृष्टः ॥ २६ ॥
अन्योन्यं दृढपीवरस्तनतटैः संघट्टयन्त्यो रसा-
देता यादवभूभुजां युवतयस्तन्वन्ति गीतध्वनिम् ।
एते मङ्गलपाठका जयरवं कुर्वन्ति कोलाहलं
श्रूयन्ते बधरीकृताखिलदिशो वादित्रनादा अमी ॥ २७ ॥
ततो हिमार्तानिव वेपमानान्
निरुद्धदस्यूनिव कातराक्षान् ।
दृष्ट्वा पशून् वाटकचारकस्थान्
जगाद सूतं जगदेकबन्धुः ॥ २८ ॥
मान्यस्य तातस्य बलस्य किं वा
भोजस्य लक्ष्मीरमणस्य वा किम् ।
किञ्चिद् वराकैरपराद्धमेभी
रुद्धा यदेवं वद वावदूक! ॥ २९ ॥
किञ्चिन्न कस्याप्यपराद्धमेभि-
रेतैर्यदूनामिह किन्तु भावि ।

सगौरवं भोजनगौरवं भो
वचो जगादेति स दक्षिणस्थः ॥ ३० ॥
उचेऽथ नाथः शृणु सारथे ! भो
गृह्णन्त्यदो भोजनगौरवं ये ।
तेऽधोगतौ गौरवमाप्नुवन्ति
तेषां च नो गौ[1] रवमातनोति ॥ ३१ ॥
ततश्च मोक्षं पशवोऽपि मंक्षु
विश्वैकबन्धोः परमप्रसादात् ।
आसादयामासुरमी समस्ता-
स्तथाविधानां महिमा ह्यचिन्त्यः ॥ ३२ ॥
सूतो रथं स्वामिनिदेशतोऽथ
निवर्तयामास विवाहगेहात् ।
यथा गुरुज्ञानबलेन मङ्क्षु
दुर्ध्यानतो योगिजनो मनः स्वम् ॥ ३३ ॥
दृष्ट्वाऽथ नेमिं विनिवर्तमानं
किमेतदित्याकुलितं वदन्तः ।
तमन्वधावन् स्वजनाः समस्ता-
स्त्रस्ताः कुरङ्गा इव यूथनाथम् ॥ ३४ ॥
वाग्भिः सुधाचन्दनशीतलाभिः
प्राबोधयत् तानिति नेमिनाथः ।
मरीचिभिः कैरवकाननानि
रात्रौ यथा कैरविणीविवोढा ॥ ३५ ॥
भोः संशृणुध्वं ननु धर्मपाप-
हेतू प्रतीतौ सुखदुःखयोर्वै ।

---

१ गौः स्वर्गः ।

तयोश्च कारुण्यवधौ प्रसिद्धा-
वेवं स्थिते किं विदुषा विधेयम् ॥ ३६ ॥
दयैव कार्या सुखकाङ्क्षिणाऽतः
स्यात् सापि सर्वाङ्गिसुरक्षणेन ।
तदिच्छताऽवश्यमवालिशेन
सङ्गः समस्तः परिहार्य एव ॥ ३७ ॥
अत्रान्तरे भास्वरकायकान्ति-
प्रद्योतिताशेषहरिद्विभागैः ।
अस्तोकलोकान्तिकदेवलोकै-
र्विज्ञप्त ईशः स्तुतिपूर्वमेवम् ॥ ३८ ॥
तुभ्यं नमो नम्रसुरासुराय
तुभ्यं नमो मन्मथनिर्जिताय ।
तुभ्यं नमः स्मेरमुखाम्बुजाय
तुभ्यं नमः सर्वजगद्धिताय ॥ ३९ ॥
आकार एवैष तव प्रतीक्ष्य !
निर्दोषभावं वदति प्रकाशम् ।
स्वरूपमावेदयतीह पूर्व
बाह्यैव चेष्टा किल सज्जनस्य ॥ ४० ॥
देशप्रकाशप्रवणाः प्रदीपवद्
गृहे गृहे तीर्थकराः सहस्रशः ।
एकस्त्वमेवासि सहस्ररश्मिव-
द्विश्वावभासी जिनराज ! केवलम् ॥ ४१ ॥
प्रसिद्ध सद्यः परमार्थवेद्य !
प्रवर्त्यतां निर्मलधर्मतीर्थम् ।
प्रयान्ति भव्या उपलभ्य यद् द्रा-

१ हरितः-दिशः ।

गगाधसंसारसमुद्रपारम् ॥ ४२ ॥

अथ प्रभुः वार्षिकदानमुच्चैः
प्रवर्तयामास यथेष्टमुर्व्याम् ।
श्रीपुष्करावर्तकवंशजातः
प्रमाणवर्जं सलिलं यथाब्दः ॥ ४३ ॥

स्निग्धां विदग्धां नृपभोजपुत्रीं
साम्राज्यलक्ष्मीं स्वजनं च हित्वा ।
पितॄननुज्ञाप्य च माननीयान्
बभूव दिक्षाभिमुखोऽथ नेमिः ॥ ४४ ॥

इतः शचीपीनकुचाब्जकोशा-
लिना दधानः कुलिशं करेण ।
ज्वलत्प्रभामण्डलकुण्डलाभ्यां
सम्पादितापूर्वकपोलशोभः ॥ ४५ ॥

वेल्लत्पताकोल्वणकिङ्किणीध्व-
निनादवाचालविमानसंस्थः ।
विज्ञाय दीक्षासमयं सुरेन्द्रः
सुरैः सहागत्य ननाम नेमिम् ॥ ४६ ॥ युग्मम्.

जलैर्विशुद्धैरभिषिच्य पूर्वं
विलिप्य दीव्यैर्घुसृणैस्ततश्च ।
प्रधानवस्त्राभरणैर्जिनेन्द्रं
विभूषयन्ति स्म सुरा नराश्च ॥ ४७ ॥

नेमिस्तदा निर्मलरत्नमाला-
मुक्तालतामण्डितकण्ठपीठः ।
जात्यास्मगर्भाभविभो बभासे
धृतेन्द्रकोदण्ड इवाम्बुवाहः ॥ ४८ ॥

सुरासुरेन्द्रैर्यदुनायकैश्च
विधीयमाने परमोत्सवेऽथ ।
माणिक्यमुक्ताफलजालमाला-
मनोरमां हेममयीं पवित्राम् ॥ ४९ ॥
नरेन्द्र-नागेन्द्र-सुरेन्द्रचन्द्रै-
र्विमानकल्पां सुखमुह्यमानाम् ।
अध्यास्य शस्यां शिबिकां जिनेन्द्रः
श्रीद्वारिकाराजपथे प्रतस्थे ॥ ५० ॥ युग्मम्.
वचःसहस्रैरभिनन्द्यमान-
श्चक्षुःसहस्रैरवलोक्यमानः ।
शिरःसहस्रैरभिवन्द्यमान-
श्चेतःसहस्रैरवधार्यमाणः ॥ ५१ ॥
संस्तूयमानो नरदेववृन्दै-
रुद्गीयमानः सुरसुन्दरीभिः ।
व्रतं जिघृक्षुर्भुवनाधिपोऽथ
प्रापोज्जयन्ताचलचूतषण्डम् ॥ ५२ ॥ युग्मम्.
तत्राशोकतले निवेश्य शिबिकां नेमिस्ततोऽवातरत्
संत्यज्यांशुकभूषणादि निखिलं निस्सङ्गचूडामणिः ।
सिद्धिश्रीपरिरम्भलाभकरणे संचारिकां कोविदां
सार्धं शुद्धकुलैः सहस्रपुरुषैर्दीक्षां प्रपेदे ततः ॥५३॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये
दीक्षावर्णनो नाम दशमः सर्ग.



# एकादशः सर्गः

अथ भोजनरेन्द्रपुत्रिका
प्रविमुक्ता प्रभुणा तपस्विनी ।
व्यलपद् गलदश्रुलोचना
शिथिलाङ्गा लुठिता महीतले ॥ १ ॥

मयि कोऽयमधीश ! निष्ठुरो
व्यवसायस्तव विश्ववत्सल ! ।
विरहय्य निजाः स्वधर्मिणी-
र्नेह तिष्ठन्ति विहङ्गमा अपि ॥ २ ॥

अपि सम्मुखवीक्षणेन ना-
नुगृहीता भवता कदाप्यहम् ।
मयि तत्किमियती कृति-
न्नबलाया भवतोऽप्रसन्नता ॥ ३ ॥

अपराधमृते विहाय मां
यदिमाम्नाद्रियसे व्रतास्त्रियम् ।
बहुभिः पुरुषैः पुरा धृतां
न हि तन्नाथ ! कुलोचितं तव ॥ ४ ॥

रचयन्ति यदीदृगुत्तमा
ननु कस्मै तदिदं निवेद्यते ? ।
अथवा सरितां पतिर्निजां
स्थितिमुज्झन्निह केन वार्यते ? ॥ ५ ॥

कुरुषे यदि सर्वदेहिनां
करुणां किं तदहं न देहभृत् ? ।
विजहासि यदेवमीश ! मा-

मतिदीनां करुणास्पदं सताम् ॥ ६ ॥

सुरपादपवत् समीहितं
जगतः पूरयसि त्वमेव हि ।
निहताशमिमं जनं ततो
विदधीथाः किमिति ? प्रिय ! प्रभो ! ॥ ७ ॥

अपहृत्य मनो मम प्रभो !
न हि गन्तुं तव युज्यते वने ।
परिगृह्य परस्य वस्तु यद्
न हि धीराः प्रविशन्ति गह्वरे ॥ ८ ॥

लभते नियतं स चिन्तितं
हृदि यो ध्यायति पूज्यमात्मनः ।
यदिदं प्रवदन्ति सूरयो
मयि किं तद् व्यभिचारमेष्यति ? ॥ ९ ॥

ननु राजिमती पुराप्यहं
मम नेमेश्च विचाल आयता ।
बत राजिरपाति वेधसा
नियतं दुर्बलघातको विधिः ॥ १० ॥

अथवा मम दुष्टकर्मणां
फलमेतत् सकलं ध्रुवं प्रभो ! ।
विजहाति मरुं यदम्बुदः
स हि दोषो मरुदुर्भगत्वजः ॥ ११ ॥

इति तां घनशोकविह्वलां
विलपन्तीं लुठितामिलातले ।
निजगाद सबाष्पगद्गदं

१ विचाले, मध्ये—आयता—आगच्छता

स्वजनोऽङ्के विनिवेश्य वत्सलः ॥ १२ ॥
राजीमति ! पुत्रि ! कोविदे !
भव धीरा विजहीहि शोचनम् ।
किं किं न भवेच्छरीरिणां
प्रतिकूले हि विधौ शुभेतरत् ? ॥ १३ ॥
कतरो विधिना न खण्डितः ?
कतरोऽभीष्टवियोगमाप न ? ।
सुखितो भुवनेऽत्र कः सदा ?
फलितं कस्य समस्तमीहितम् ? ॥ १४ ॥
रुदितेन तनुभृता किल
स्वमनोऽभीष्टमवाप्यते यदि ।
बहुशो विरसं रटंस्तदा
रवणो नैव लभेत यातनाम् ॥ १५ ॥
निपतन् सहसा महीतले
भ्रियते मेरुमहीधरः कदा ।
न पुनर्भविनां शुभाशुभः
परिणामः समुपात्तकर्मणाम् ॥ १६ ॥
परिवृत्य दिनक्षपे इव
ध्रुवमेतोऽङ्गिनि सम्पदापदौ ।
तदलं विबुधे ! शुचाधुना
कुरु धर्मं सकलार्थसाधनम् ॥ १७ ॥
नियतं सकलार्थसिद्धयः
सुकृतादेव भवन्ति देहिनाम् ।
नवपल्लवपुष्पसम्पदोऽ-
म्बुदसेकादिव नीपभूरुहाम् ॥ १८ ॥

इति सा स्वजनेन बोधिता
　विदुषी शोकमपास्य दूरतः ।
समजायत धर्मतत्परा
　सुखबोध्यो हि विशारदो जनः ॥ १९ ॥

अथ रागरुषा विवर्जितः
　शशिबिम्बोपमसौम्यदर्शनः ।
सुरशैलसमानधीरिमा
　परमध्यानमना जिनोऽजनि ॥ २० ॥

करुणारसवीचिसागरः
　परवस्तुग्रहणे पराङ्मुखः ।
हितसत्यवचाः सुशीलवान्
　मुनिपोऽभूत् समलोष्टकाञ्चनः ॥ २१ ॥

परमोग्रतपःकरौजसा
　घनकर्मद्रुचयं समुत्खनन् ।
प्रभुमत्तमतङ्गजः सुखं
　विजहाराचलकाननादिषु ॥ २२ ॥

उपसर्गपरीषहद्विषो-
　वगणय्यात्र जिनाधिनायकः ।
तप आरभतातिदुःसहं
　खलु शुद्धिर्न तपो विनात्मनः ॥ २३ ॥

चरणक्षितिपालसैनिकै-
　रथ गाढं विषया विडम्बिताः ।
निजनायकमोहराट्पुरो
　विदधुः पूत्कृतिमुच्चकैरिति ॥ २४ ॥

हठतः परिगृह्य सर्वतो
जिननेमीशमनोमहापुरम् ।
चरणाधिपसैनिकैर्विभो !
सह कामेन कदर्थिता वयम् ॥ २५ ॥
खगणो निखिलो नियन्त्रितः
स्मरभार्या बहुशो विडम्बिता ।
महिता नगराधिदेवता
मदमिथ्यात्वभटादिमौलिभिः ॥ २६ ॥
बहुना किमधीश ! शत्रुभिः
परमध्यानबलेन निर्दयम् ।
रतिकामबलं विलोडितं
सुरसंघैरिव मेरुणार्णव ॥ २७ ॥
त्वरितं निजवैरिशुद्धये
क्रियतां देव ! समुद्यमोऽधुना ।
रिपवस्तरवश्च दुर्धरा
ननु पश्चाद् दृढबद्धमूलकाः ॥ २८ ॥
रिपवश्च गदाश्च येन भो
उदयन्तोऽपि न सर्वथा हताः ।
कतिभिर्दिवसैरसंशयं
स हि तेभ्यो लभते परापदम् ॥ २९ ॥
अनिहत्य रिपून् स्वगर्वतो
गतचिन्तो निवसेद् नृपोऽत्र यः ।
सविधे स्वपितीह मूढधीः
स परिक्षिप्य हविर्हुताशने ॥ ३० ॥
विषयैरिति संनिवेदिते

जगदे मोहनृपेण सस्मितम्
विचरन्तु सुखं मृगा अमी ।
शेते यावदयं मृगाधिपः ॥ ३१ ॥
मम नेमिपुरं हि शासतः
किल कालः प्रययावनन्तकः ।
तदिदं मयि जीवति क्षितौ
सति गृह्णाति भटोऽद्य कः परः ॥ ३२ ॥
अथ मोहमहीभुजात्मनो
द्विषतां चापि बलं बुभुत्सुना ।
कुमताभिधदूतपुङ्गवं
प्रहितः संयमराजसन्निधौ ॥ ३३ ॥
परितो द्विषतां मनोऽम्बुधौ
जनयन् क्षोभमनुत्तरं ततः ।
चरणाधिपपर्षदन्तरे
स विशित्वेति जगौ पटुप्रवाक् ॥ ३४ ॥
तव संदिशतीति मोहराट्
चरणाधीश्वर ! मन्मुखेन भोः ।
त्यज नेमिमनःपुरं मम
व्रज चान्यत्र तवास्तु मङ्गलम् ॥ ३५ ॥
त्यजतस्तव नेमिमानसं
न हि लज्जा कणिकाऽपि संयम ! ।
यदमोचि पुरापि राजभि-
र्बहुभिर्भूर्बलवत्प्रणोदितैः ॥ ३६ ॥
अथवा चरणेश ! दुस्सहे
मम सैन्ये प्रबले विलोकिते ।

पुरतोऽपि पलायनाभिधा
तव विद्या वशवर्तिनी सदा ॥ ३७ ॥
न पुनर्यदि नेमिपत्तनं
विजहामि व्रतभूप ! सम्प्रति ।
न भविष्यसि तर्हि निश्चितं
चरितं मे तव संस्तुतं सदा ॥ ३८ ॥
परिणामहितं वचो मया
स्फुटमाख्यातमिदं तवाग्रतः ।
अथ यत् तव रोचतेतरां
कुरु तत्संप्रति संयमाधिप ! ॥ ३९ ॥
कुमते वदतीत्यनर्गलं
चरणाधीश्वरनेत्रनोदितः ।
स्मितपूर्वमभाषत स्फुटं
सचिवः शुद्धविवेकसंज्ञकः ॥ ४० ॥
सत्र दूत ! सुभाषितं ह्यद-
स्त्वमहो वाग्म्यसि बुद्धिमानासि ।
वचनं भवता विनेदृशं
ननु वक्तुं भुवि वेत्ति कः परः ? ॥ ४१ ॥
विनिपात्य रिपून् परं बलात्
प्रगृहीतं निजवासहेतवे ।
रिपुमोहभयाद् विमुच्यते
कथमस्माभिरिदं मनःपुरम् ? ॥ ४२ ॥
परिगृह्य तव प्रभोर्बला-
दपि दुर्गाणि पुराण्यनेकशः ।

---

१ परिचितम् ।

अट्ठविहं कम्मरयं बहूएहिं भवेहिं संचिअ जम्हा ।
तव-संजमेण धोवइ तम्हा तं भावओ तित्थ ॥ २७ ॥
दंसण-नाण-चरितेसू निउत्तं जिणवरेहिं सव्वेहिं ।
एएण होइ तित्थ एसो अन्नो वि पज्जाओ ॥ २८ ॥
नामकरो ठवणाकरो दव्वकरो खित्त-काल-भावकरो ।
एसो खलु करगस्स उ निक्खेवो छव्विहो होइ ॥ २९ ॥
गो-महिसु-ट्टिपसूणं छगलीण पि अ करा मुणेअव्वा ।
तत्तो अ तणपलाले भुसकट्ठगारकरमेव ॥ ३० ॥
सीउबरजघाए बलिभद्दकरे घरे अ चम्मे अ ।
चुल्लगकरे अ भाणिए अट्ठारसमा करुप्पत्ती ॥ ३१ ॥
खित्तम्मि उमि खित्ते काले जो जम्मि होइ कालम्मि ।
दुविहो उ होइ भावे अपसत्थो तह पसत्थो अ ॥ ३२ ॥
कलहकरो डमरकरो असमाहिकरो अनिव्वुइकरो अ ।
एसो अ अप्पसत्थो एवमाई मुणेअव्वो ॥ ३३ ॥

---

अष्टविध कर्मरजो बहुकैर्भवै सचित यस्मात् ।
तप -सयमेन *धाव्यते तस्मात् तत् भावतस्तीर्थम् ।
दर्शन-ज्ञान-चारित्रेषु नियुक्त जिनवरै सर्वै ।
एतेन भवति तीर्थमेषोऽन्योऽपि पर्याय ॥ २८ ॥
नामकर स्थापनाकरो द्रव्यकर क्षेत्र-काल-भावकर ।
एष खलु -करकस्य तु निक्षेप षड्विधो भवति ॥ २९ ॥
गो-महिषो-ष्ट्रीपशूना छगलीनामपि च करो ज्ञातव्य ।
ततश्च तृण-पलाले भुशकाष्ठाङ्गारकर एव ॥ ३० ॥
सीतोदुम्बरजङ्घाया बलि-भद्रकरो गृहे च चर्मणि च
चुल्लककरश्च भणित अष्टादशकरोत्पत्ति ॥ ३१ ॥
क्षेत्रे यस्मिन् क्षेत्रे काले यो यस्मिन् भवति काले ।
द्विविधस्तु भवति भावेऽप्रशस्तस्तथा प्रशस्तश्च ॥ ३२ ॥
कलहकरो डमरकरोऽसमाधिकरोऽनिर्वृतिकरश्च ।
एष चाप्रशस्त एवमादिर्ज्ञातव्य ॥ ३३ ॥

---

* 'धावूण् गतिशुद्धयो' अस्यात्र शुद्ध्यर्थे प्रयोग । ÷ करोतीति कर, स एव करक ।

अत्थकरो हिअकरो कित्तिकरो गुणकरो जसकरो अ ।
अभयकर निव्वुइकरो कुलगर तित्थकरतकरो ॥ ३४ ॥
जिअकोह-माण-माया जिअलोभा तेण जिणा हुति ।
अरिणो हन्ता रयं हन्ता अरिहन्ता तेण वुच्चन्ति ॥ ३५ ॥
कित्तेमि कित्तणिज्जे सदेवमणुआसुरस्स लोगस्स ।
दसणनाणचरित्ते तवविणयो दसिओ जेहिं ॥ ३६ ॥
चउवीस ति अ सखा उसभाइआ उ भण्णमाणा उ ।
अवि सद्दग्गहणा पुण एरवयमहाविदेहेसु ॥ ३७ ॥
कसिण केवलकप्प लोग जाणन्ति तह य पासन्ति ।
केवलचरित्तनाणी तम्हा ते केवली हुन्ति ॥ ३८ ॥
ऊरूसु उसभलंछण उसभ सुमिणम्मि तेण उसभजिणो ।
अक्खेसु जेण अजिआ जणणी अजिओ जिणो तम्हा ॥ ३९ ॥
अभिसभूआ सासत्ति सभवो तेण वुच्चइ भगव ।
अभिनंदइ अभिक्ख सक्को अभिनदणो तेण ॥ ४० ॥

---

अर्थकरो हितकर कीर्तिकरो गुणकरो यशस्करश्च ।
अभयकरो निर्वृतिकर कुलकरस्तीर्थकरोऽ*न्तकर ॥ ३४ ॥
जितक्रोधमानमाया जितलोभास्तेन जिना भवन्ति ।
अरीन् हन्तारो रजो हन्तारोऽरिहन्तारस्तेनोच्यन्ते ॥ ३५ ॥
कीर्तयामि कीर्तनीयान् सदेवमनुजासुरस्य लोकस्य ।
दर्शनज्ञानचरित्रे तपोविनयो दर्शितौ यै ॥ ३६ ॥
चतुर्विंशतिरिति च सङ्ख्या ऋषभादिकास्तु भण्यमाणास्तु ।
अपि शब्दग्रहणात् पुनरैरवत-महाविदेहेषु ॥ ३७ ॥
कृत्स्नं केवलकल्पं लोकं जानन्ति तथा पश्यन्ति ।
केवलचरित्रज्ञानिनस्तस्मात् ते केवलिनो भवन्ति ॥ ३८ ॥
ऊरुषु ऋषभलाञ्छनमृषभं स्वप्ने तेनर्षभजिन ।
अक्षेषु येनाऽजिता जननी अजितो जिनस्तस्मात् ॥ ३९ ॥
अभिसंभूतानि सस्यानीति संभवस्तेनोच्यते भगवान् ।
अभिनन्दत्यभीक्ष्णं शक्रोऽभिनन्दनस्तेन ॥ ४० ॥

---

* कर्मणा ससारस्य वा अन्तकरः ।

जणणी सव्वत्थ विणिच्छिएसु सुमइ त्ति तेण सुमइजिणो।
पउमसयणम्मि जणणीइ डोहलो तेण पउमाभो ॥ ४१ ॥
गब्भगए ज जणणी जायसुपासा तओ सुपासजिणो।
जणणीइ चदपिअणम्मि डोहलो तेण चदाभो ॥ ४२ ॥
सव्वविहीसु अ कुसला गब्भगए तेण होइ सुविहिजिणो।
पिउणो दाहोवसमो गब्भगए सीअलो तेण ॥ ४३ ॥
महरिहसिज्जारुहणम्मि डोहलो तेण होइ सिज्जसो।
पूएइ वासवो ज अभिक्खण तेण वसुपुज्जो ॥ ४४ ॥
विमलतणु-बुद्धि जणणी गब्भगए तेण होइ विमलजिणो।
रयणविचित्तमणत दाम सुमिणे तओऽणतो ॥ ४५ ॥
गब्भगए ज जणणी जाया सुधम्मत्ति तेण धम्मजिणो।
जाओ असिवोवसमो गब्भगए तेण सतिजिणो ॥ ४६ ॥
थूभं रयणविचित्त कुथु सुमिणम्मि तेण कुथुजिणो।
सुमिणे अर महरिह पासइ जणणी अरो तम्हा ॥ ४७ ॥

---

जननी सर्वत्र विनिश्चितेषु सुमतिरिति तेन सुमतिजिन ।
पद्मशयने जनन्या दोहदस्तेन पद्माभ ॥ ४१ ॥
गर्भगते यज् जननी जातसुपार्श्वा तत सुपार्श्वजिन ।
जनन्याश्चन्द्रपाने दोहदस्तेन चन्द्राभ ॥ ४२ ॥
सर्वविधिषु च कुशला गर्भगते तेन भवति सुविधिजिन ।
पितुर्दाहोपशमो गर्भगते शीतलस्तेन ॥ ४३ ॥
महार्हशय्यारोहणे दोहदस्तेन भवति श्रेयास ।
पूजयति वासवो यमभिक्षण तेन वसुपूज्य ॥ ४४ ॥
विमलतनु-बुद्धिर्जननी गर्भगते तेन भवति विमलजिन ।
रत्नविचित्रमनन्तं दाम स्वप्ने ततोऽनन्त ॥ ४५ ॥
गर्भगते यज्जननी जाता सुधर्मेति तेन धर्मजिन
जातोऽशिवोपशमो गर्भगते तेन शान्तिजिन ॥ ४६ ॥
स्तूपं रत्नविचित्र –कुंथं स्वप्ने तेन कुन्थुजिन ।
स्वप्नेऽरं महार्हं पश्यति जननी अरस्तस्मात् ॥ ४७ ॥

---

– कौ भुवि तिष्ठति तमित्यर्थ ।

वरसुरहिमल्लसयणम्मि दोहलो जेण तेण होइ मल्लिजिणो ।
जाया जणणी ज सुव्वय त्ति मुणिसुव्वओ तम्हा ॥ ४८ ॥
पणया पच्चन्तनिवा दसिअमित्ते जिणम्मि तेण नमी ।
रिट्ठरयण च नेमी उप्पयमाण तओ नेमी ॥ ४९ ॥
सप्प सयणे जणणी ज पासइ तमसि तेण पासजिणो ।
वड्ढइ नायं कुल ति अ तेण जिणो वद्धमाणु त्ति ॥ ५० ॥
थुइथुणण-वदण-नमंसणाणि एगट्ठिआणि एआणि ।
कित्तणपससणाणि य विणयपणामे अ एगट्ठो ॥ ५१ ॥
मिच्छत्तमोहणिज्ज नाणावरण चरित्तमोह च ।
तिविहतमा उम्मुक्का तम्हा ते उत्तमा हुति ॥ ५२ ॥
आरुग्गबोहिलाभ समाहिवरमुत्तम च मे दिन्तु ।
कि बहु ?, निआणमेअं ति वि भासा इत्थ कायव्वा ॥ ५३ ॥
भासा असच्चमोसा नवर भत्तीए भासिआ एसा ।
न हु खीणपिज्जदोसा दिन्ति समाहि च बोहिं च ॥ ५४ ॥

---

वरसुरभिमाल्यशयने दोहदो येन तेन भवति मल्लिजिन ।
जाता जननी यत् सुव्रतेति मुनिसुव्रतस्तस्मात् ॥ ४८ ॥
प्रणता प्रत्यन्तनृपा दार्शितमात्रे जिने तेन नमि. ।
रिष्टरत्न च नेमिमुत्पतन्त ततो नेमि ॥ ४९ ॥
सर्प शयने जननी यत् पश्यति तमसि तेन पार्श्वजिन ।
वर्धते ज्ञात कुलमिति च तेन जिनो वर्धमान इति ॥ ५० ॥
स्तुति स्तवन-वन्दन-नमस्यनानि एकार्थकानि एतानि ।
कीर्तनप्रशंसनानि च विनयप्रणामश्चैकार्थ ॥ ५१ ॥
मिथ्यात्वमोहनीय ज्ञानावरणं चारित्रमोहश्च ।
त्रिविधतमस उन्मुक्तास्तस्मात् ते उत्तमा भवन्ति ॥ ५२ ॥
आरोग्यबोधिलाभं समाधिवरमुत्तमं च मे ददतु ।
किं बहु ?, निदानमेतत् इति विभाषाऽत्र कर्तव्या ॥ ५३ ॥
भाषा असत्यमृषा नवरं भक्त्या भाषितैषा ।
न खलु क्षीणप्रेमद्वेषा ददति समाधिं च बोधिं च ॥ ५४ ॥

विशदात्मपुराणि सर्वथा
परिभुङ्क्ते व्रतभूपतिः स्वयम् ॥ ४३ ॥
यदि शक्तिरिहास्ति ते प्रभोः
प्रतिगृह्णातु तदा तु तान्यपि ।
परमेष विलोलजिह्वया
कपटी भापयते जगज्जनम् ॥ ४४ ॥
अवगच्छति योऽस्य लक्षणं
कितवस्याधिपतेः सखे ! तत्र ।
सपरिच्छदमेव तत्क्षणात्
सुखमुन्मूलयतीममेष सः ॥ ४५ ॥
तव दूत ! पतिः सकोधुना
विनिवार्यो भवता कदाग्रहात् ।
चरणोत्कटसैन्यपावके
भविताऽयं शलभोऽन्यथा ध्रुवम् ॥ ४६ ॥
इति संयममन्त्रिणोदिते
रिपुदूतः पुनरब्रवीदिदं ।
मम चेतसि भासतेतरां
चरण ! त्वं सपरिच्छदः कुधीः ॥ ४७ ॥
यदवाचि मया हित वचो
ननु युष्मासु बभूव तत्क्रुधे ।
तदिदं खलु सत्यमेव य-
न्न हि कार्या हितदेशना जडे ॥ ४८ ॥
क्व स मोहनृपभटोऽग्रणीः
क्व भवानेष च कातराग्रणीः ।
विविनक्ति मदान्धलोचनो
न परं स्वेतरयोर्बलाबलम् ॥ ४९ ॥

मम नाथभटैः स्वलीलया
तव भग्नाः शतशो यदाश्रयाः ।
किमियं तव शूरता सखे !
पितृसद्मोपगताभवत् तदा ॥ ५० ॥
किमिदं तव विस्मृतं ? सखे !
यदसौ पूर्वभवेषु नेमिराट् ।
मम भूमिभुजात्मसात्कृत
परिनिर्वाप्य भवन्तमागतम् ॥ ५१ ॥
अपसार्य भवन्तमग्रतः
तव पात्राणि कदर्थितान्यहो ।
मयका स्वपतिप्रसादतः
स्मरसीदं स्मरणैकपण्डित ! ॥ ५२ ॥
क्षयमेष्यसि संयमाल्पधी-
रवजानन् मम नाथमुत्कटम् ।
प्लवगस्य पराभवो ध्रुवं
मृगनाथे मरणैकहेतवे ॥ ५३ ॥
इति कर्कशमस्य भाषितं
भृशमाकर्ण्य चरित्रसैनिकाः ।
कुपिताः कुमतं गले दृढं
किल धृत्वा निरकाशयन् बहिः ॥ ५४ ॥
विहितं रिपुभिः स्वघर्षणं
स च गत्वा नृपमोहपर्षदि ।
निजगाद समस्तमुच्चकै-
र्व्रतभूपालबलं प्रकाशयन् ॥ ५५ ॥

---

१ खेदयित्वेत्यर्थः ।

कुपितोऽथ रणाय सोद्यमः
स्वभटानाह्वयति स्म मोहराट् ।
बलिनः खलु मानशालिनो
विषहन्ते न रिपोः पराभवम् ॥ ५६ ॥

परिमील्य ततो मदोद्धतं
बलमात्मीयमशेषमादृतः ।
चरणेन समं रणोत्सवं
प्रचिकीर्षुः प्रचचाल मोहराट् ॥ ५७ ॥

पुरतोऽथ मम द्विषो महा-
सुभटानामभिधां गृहाण भोः ।
इति पृष्ट उवाच संयम-
क्षितिपालेन सुबोधधीसखः ॥ ५८ ॥

शृणु नाथ ! तव द्विषो बले
कुमताख्यः सुभटो महाबलः ।
कपटैर्विविधैर्विचेष्टितैः
सकलं येन विडम्बितं जगत् ॥ ५९ ॥

अमुनैव जनाः प्रतारिता
ननु लिङ्गं प्रणमन्ति के च न ।
अपरे मुमुचुः कुटुम्बकं
वपुरर्चन्ति च केऽपि भस्मना ॥ ६० ॥

पुरुषप्रमदारथाश्रया
विषयाः पञ्च परे महाभटाः ।
अवमन्य भवन्तमीश्वरं
निखिला यैर्जनता विगोप्यते ॥ ६१ ॥

रिपुमोहसुतः क्रुधाभिधोऽ-

रुणतावेपथुतापलक्षणः ।
उदितः स शिखीव देहिनां
लघु भस्मीकुरुते गुणेन्धनम् ॥ ६२ ॥
परनिन्दनतत्परः पर-
स्तनयोऽस्यैव हि माननामकः ।
तृणवद् मनुते जगत्त्रयं
स्वगुणैरेष समुन्नतः सदा ॥ ६३ ॥
मधुरां भुवनप्रतारिणीं
शठतां मोहसुतां विलोकसे ।
यदपीयमहो निहन्यते
तदपि स्त्रीवधजं न पातकम् ॥ ६४ ॥
समुदेति च येन जीवता
क्षिपितोऽपि द्विषतोन्वयस्त्वया ।
त्रिजगत्यपकारकारकं
ननु लोभाह्वमवेहि तं भटम् ॥ ६५ ॥
इह यास्ति विपक्षमध्यगा
विकथैका सुभटी चतुर्मुखी ।
अनया बहु खेदिता भटा-
स्तव सद्बोधसदागमादयः ॥ ६६ ॥
प्रतिपक्षमहीभुजः परं
प्रतिकूलो विधिरद्य वर्तते ।
करमध्यग एव तेन ते
विजयो नाथ ! न चात्र संशयः ॥ ६७ ॥
वदतीति सुबोधमन्त्रिणि
स्फुटमेवं तुमुलः समुत्थितः ।

त्वरितं प्रगुणीभवन्तु भोः
सुभटाः ! शत्रुचमूः समागमत् ॥ ६८ ॥
मुदिताः चरणेशसैनिकाः
जगृहुर्वर्म ततश्च सोद्यमाः ।
प्रथमं बहुशः प्रबुध्यते
मन आगामि शुभाशुभं कदा ॥ ६९ ॥
अवलोक्य पुरो द्विषां बलं
मम भावी विजयोऽधुना न वा ।
इति मोहमहीभुजोदितो
गणकः स्माह मनोभिधस्तदा ॥ ७० ॥
गहनं ननु दैवचेष्टितं
न हि सम्यक् तदिनाऽवधार्यते ।
शकुना न शुभा भवन्ति भो
विजयस्तेन तवाद्य दुर्लभः ॥ ७१ ॥
अथ सस्मितमाह मोहराट्
स्खलितस्त्वं गणकब्रुवाबुध ! ।
यदि मेरुरपांनिधिं तरेद्
न भवेत् तर्ह्यपि मे पराजयः ॥ ७२ ॥
गणयंस्तृणवद्रिपून् मदात्
कुपितो मोहमहीपतिस्ततः ।
समराय समुत्थितो रयात्
सह रागादिकदण्डनायकैः ॥ ७३ ॥
उपसर्गगजाः पुरस्कृता
मदहास्यादिहयाः प्रणोदिताः ।
चलिता विषया महारथा

अभिमानादिभटाश्च सज्जिताः ॥ ७४ ॥
क्षुभिताम्बुधिसन्निभं तदा
प्रबलं मोहबलं सुदुस्सहम् ।
अवलोक्य चरित्रभूभुजः
परिलग्नाः सुभटाः प्रकम्पितुम् ॥ ७५ ॥
उदिता बलशालिना ततः
सुभटास्तत्त्वविमर्शमन्त्रिणा ।
मा भैष्ट भवेत सुस्थिता
ननु धीरैः क्रियते द्विषज्जयः ॥ ७६ ॥
विकलाङ्गधरोऽपि तापनं
यमवप्तारमपि प्रभापतिम् ।
ग्रसते ननु सिंहिकासुतो
नियतं सत्त्ववशा हि सिद्धयः ॥ ७७ ॥
प्रहिनस्ति यथा मृगाधिपो
ध्रुवमेकोऽपि शतानि हस्तिनाम् ।
न तथा यदि मोहसैनिकान्
निखिलान् हन्मि न तर्हि पूरुषः ॥ ७८ ॥
रणतूर्यरवे समुत्थिते
भटहक्कापरिगर्जितेऽम्बरे ।
उभयोर्बलयोः परस्परं
परिलग्नोऽथ विभीषणो रणः ॥ ७९ ॥
बलयोरितरेतरं तयो-
र्जयभङ्गौ बहुशो वितन्वतोः ।
त्वरितं त्वरितं खगीव सा
जयलक्ष्मीर्भ्रमति स्म मध्यगा ॥ ८० ॥

चरणेशभटैर्बलोत्कटैः
कुपितैर्ब्रह्मभिदाख्ययष्टिभिः ।
प्रविदारितमस्तकः स्मरः
सह पत्न्याथ पपात निस्सहः ॥ ८१ ॥

प्रणिधानभटेन जिष्णुना
शुभलेश्यागदया गरिष्ठया ।
बहवः परिचूर्णितास्ततः
कणशो मोहमहीपतेर्भटाः ॥ ८२ ॥

मम वा चरणाधिपस्य वा
मल्ययोऽद्येति विनिश्चयस्ततः ।
समराय समुत्थितः स्वयं
नृपमोहः सह लोभसैनिकैः ॥ ८३ ॥

विशदाध्यवसायमुद्गरै-
र्बलवान् संयमभूपतिस्ततः ।
रयतोऽभिसरन्तमेव त
सहसाऽऽहत्य चकार खण्डशः ॥ ८४ ॥

संश्लाघ्यमानोऽथ नरामरेन्द्रै-
श्चारित्रराजः सुमवृष्टिपूर्वम् ।
स्वसैन्ययुक्तः परमोत्सवेन
विवेश नेमीश्वरराजधान्याम् ॥ ८५ ॥

श्रीमन्नेमेरथ निरुपमे केवलज्ञानदृष्टी
निर्व्याघाते समुदलसतां घातिकर्मक्षयेण ।
लोकालोकौ सततमखिलौ यत्प्रभावेन जीवो
नित्यं हस्तामलकफलवद् बुध्यते वीक्षते च ॥ ८६ ॥

ति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये
मोहसंयमयुद्धवर्णनो नाम एकादशः सर्गः ।

## द्वादशः सर्गः

कलधौतहेममणिशालमध्यगं
सुरसंघनिर्मितमृगेन्द्रविष्टरम् ।
श्रितवान् रराज भगवानथासितः
कनकाद्रिशृङ्गमिव नव्यनीरदः ॥ १ ॥

भगवन्तमाप्तवरकेवलं ततः
परिगम्य हर्षजलधिर्विवन्दिषुः ।
निरगाज्जवाद् यदुपतिः सनागरो
न हि धर्मकर्मणि सुधीर्विलम्बते ॥ २ ॥

प्रचलन् पथि प्रणयपूर्णमानसः
पुरकाननप्रभृतिदर्शनोन्मुखीम् ।
नगरीजनः प्रियतमां निजामिदं
वचनं कराभिनयपूर्वमब्रवीत् ॥ ३ ॥

विविधद्रुमं गुपिलवल्लिमण्डपं
सफलं सुगन्धि सुमनोमनोरमम् ।
बहुभिर्विहङ्गमकुलैर्निषेवितं
प्रविलोकयेः सुतनु ! पावनं वनम् ॥ ४ ॥

मदमत्तभृङ्गपिकयोषितां रवै-
रपि वातनुन्नदलहस्तसञ्ज्ञया ।
अयमाह्वयन्निव फलार्थिनं जनं
सहकारवृक्ष इव लक्ष्यते प्रिये ! ॥ ५ ॥

उपरिभ्रमद्भ्रमरमण्डलैरसौ
कथिताग्र्यगन्धमहिमाऽपरद्रुमान् ।
तरलैर्दलैः स्फुटमधः क्षिपन्निव

प्रसृताक्षि ! केतकतरुर्विलोक्यताम् ॥ ६ ॥
शिशिराः परोपकृतिहेतवे सदा
दधतोऽपि जीवनमनाविलं बहु ।
विदितास्तथापि च जडाशया अमी
सुकृतैर्यशो नियतमाप्यते प्रिये ! ॥ ७ ॥
शुकशारिकाद्विकापिकादिपक्षितः
परिरक्ष्यमाणमभितः कृषीबलैः ।
प्रसमीक्ष्यतां स्वफलभारभङ्गुरं
परिपक्वशालि वनमायतेक्षिणि ! ॥ ८ ॥
पवमानचञ्चलदलं जलाशये
रवितेजसा स्फुटदिदं पयोरुहम् ।
परिशङ्क्यते बत मया तवाननात्
कमलाक्षि ! विभ्यदिव कम्पतेतराम् ॥ ९ ॥
गुडशर्कराजनक इक्षुदण्डकः
परमं रसं वहति यद्यपि प्रिये ! ।
अधरस्तथापि च तवाधरादसा-
वपि भूषणाद् भवति नीरसो यतः ॥ १० ॥
कलगीतिनादरसरङ्गवेदिनो
हरिणा अमी हरिणलोचने ! वने।
सह कामिनीभिरलमुत्पतन्ति हे
परिपीतवातपरिणोदिता इव ॥ ११ ॥
अपहाय भोजतनयां पतिव्रतां
स्वजनं च राज्यमपि रेणुवद् वशी ।
विजहार यत्र तप आचरन् जिनः
सक उज्जयन्तगिरिरेष वल्लभे ! ॥ १२ ॥
सहकार एष खदिरोऽयमर्जुनोऽ-

यमिमौ पलाशबकुलौ सहोद्गतौ ।
कुटजावमू सरल एष चम्पको
मदिराक्षि ! शैलविपिने गवेष्यताम् ॥ १३ ॥
इदमङ्ग ! पश्यसि पुरो विभास्वरं
भुवनाधिपस्य विशदं सभागृहम् ।
उपदर्शयद्भिरिह भक्तिमात्मनः
परमां व्यधायि मुदितैः सुरासुरैः ॥ १४ ॥
वपुरंशुभासितसमस्तादिक्तटाः
शुचिदिव्यभूषणधराः सह प्रियैः ।
त्रिजगद्गुरोः सदसि शब्दिनूपुराः
प्रविशन्ति पत्नि ! सुरनायिका अमूः ॥१५॥
दयिताभ्य उत्तमममी नवं नवं
पथि दर्शयन्त इति वस्तु नागराः ।
सह माधवेन परिवारराजिना
सद आसदन् झटिति पारमेश्वरम् ॥ १६ ॥
परिहृत्य वाहनमथ प्रमोदभा-
गवलोकयन्निह विरोधवर्जितान् ! ।
सकलान् पशूनपि हरिः सविस्मयः
सपरिच्छदोऽविशदसौ सभां विभोः ॥ १७ ॥
त्रिदशैर्जिनेशितरि भक्तिमद्भुतां
परिदर्शयद्भिरभिवृष्टमुत्तमम् ।
शुचिजानुदघ्नमभितः सभाङ्गणे
बहुवर्णपुष्पनिकरं बहु स्तुवन् ॥ १८ ॥
विदधन् निजश्रवणगोचरं मुदा
कलदेवदुन्दुभिनिनादमुच्चकैः ।
परमां च तीर्थकरनामकर्मजां

जिननायकर्द्धिमभिवर्णयन् मुहुः ॥ १९ ॥

मणिमौक्तिकप्रकरजालभास्वदा-
तपवारणत्रितयमिन्दुसुन्दरम् ।
स ददर्श तत्र शिरसि प्रभोर्धृतं
भुवनत्रयाधिपतिताभिसूचकम् ॥ २० ॥ त्रिभिः कुलकम्

शुचिराजहंसयुगलान्तरालगं
स्मितपङ्कजातमिव सुन्दरं ततः ।
चलचामरद्वितयमध्यवर्ति तत्
त्रिजगद्गुरोर्वदनमैक्षताच्युतः ॥ २१ ॥

परमां विलोक्य विभुरूपसम्पदं
त्रिजगद्गतां शुचिपदार्थसंहतिम् ।
बहुशः स्मरन्नपि मनोऽन्तरादरा-
दुपमानमाप न किमप्यसौ सुधीः ॥ २२ ॥

विशदांशुमन्तमिव तेजसांनिधिं
शशिबिम्बतोऽप्यधिकसौम्यदर्शनम् ।
नवमेघवत् शुभगमूर्तिमीश्वरं
मुरजिद् निरीक्ष्य हृदि पिप्रियेऽधिकम् ॥ २३ ॥

प्रथमं विधाय विधिना प्रदक्षिणां
गणाय स्वजन्म सफलं च जीवितम् ।
अथ माधवो विनयभक्तिमानदः
प्रणनाम नाथपदपङ्कजद्वयम् ॥ २४ ॥

प्रणमत्सुरेश्वरकिरीटकोटिगाऽ-
नणुरत्नघृष्टचरणाम्बुजन्मनः ।
रचिताञ्जलिर्भगवतोऽथ केशवः

स्तवनं विधातुमिति च प्रचक्रमे ॥ २५ ॥
भगवंस्त्वदाननशशाङ्कदर्शनात्
प्रथमाऽभवत् सफलताद्य नेत्रयोः।
उपजायते स्म भुवनत्रयीप्रभो!
भववारिधिश्चुलुकमात्र एष मे ॥ २६ ॥
अमृतं क्षरन्तमिव सौम्यया दृशा
करुणाम्बुधिं परमसंविदांनिधिम्।
भगवन्! भवन्तमवलोकयन्नयं
परितोषमेति परमं जनार्दनः ॥ २७ ॥
किल माति विश्वमिदमच्युतोदरे
सुखमत्र येति जनगीर्जिनेश्वर!।
तव देव! दर्शनजया मुदाऽनया
वितथा व्यधाय्यपरिमातयाऽद्य सा ॥ २८ ॥
विसृजन्ति वैरमिह सर्ववैरिणो
जिनपर्षदीति जगतोच्यते प्रभो!।
पुरतस्तवैव पुनरान्तरद्विषो
भविको निहन्ति तदिदं महाद्भुतम् ॥ २९ ॥
भगवन्! विभाति तव पृष्ठगो ह्यसौ
नवपल्लवः सरसचैत्यपादपः।
परिवर्त्त्य रूपमिह सेवनोद्यतो
विभुदाननिर्जित इवामरद्रुमः ॥ ३० ॥
नेतुर्न ते नेतुमलं सुराङ्गना
मनोविकारं कठिनस्तना अपि।
शुच्यङ्गहाराः[1] पृथुलास्यकान्तयः[2]

---

१ शुचयोऽङ्गे हारा यासां ताः। २ विशालमुखकिरणाः

शुच्यङ्गहाराः पृथुलास्यकान्तयः ॥ ३१ ॥

कोटिः सुराणां च जघन्यतोऽपि
सदैव तिष्ठेत् समया भवन्तम् ।
त्वां सेवते यः पुनरीश ! लक्ष्मी-
र्भजेत् सुबुद्ध्याऽसमयाऽऽभवं तम् ॥ ३२ ॥

पुण्य ! कोपचयदं नतावकं
पुण्यकोपचयदं न तावकम् ।
दर्शनं जिनप ! यावदीक्ष्यते
तावदेव गददुस्थतादिकम् ॥ ३३ ॥

तदनन्तरमामयं समं
प्रथमं मोहरिपुं विभिन्द्धि मे ।
तदनन्त-रमामयं समं
प्रमया देहि पदं कृपामय ! ॥ ३४ ॥

तव यशोऽप्सरसः कुलशैलगा
जिन ! जगुर्मुनिवत्परमाक्षरम् ।
परभृताभरणाः सुरसं गताः
परभृताभरणाः सुर-संगताः ॥ ३५ ॥

स्तवीति यस्त्वां जिनराज ! लक्ष्म्याऽऽ-
करोऽतिकान्त ! प्रतिभाति सारम् ।
पुमान् स विश्वेश ! सरस्वती तं

---

१ शुचय -पवित्रा अङ्गहारा अङ्गविक्षेपा यासा ता । २ अतुल्यया सुबुद्ध्या सहेत्यर्थ । ३ कोपस्य चय वृद्धि द्यति-खण्डयाति यत् तत् । ४ नतस्य अवक रक्षकम्। ५ पुण्यस्य-धर्मस्य कस्य-सुखस्य च उपचय समृद्धि ददाति य-त्तत् । । ६ आमयम्—उपतापम् । ७ अनन्तलक्ष्मीमयम् । ८ सम्यग्-ज्ञानेन । ९ पराणि—प्रकृष्टानि, भृतानि धृतान्याभरणानि याभिस्ताः । १० कोकिलतुल्यशब्दाः । ११ हे अतिस्वे !

१४

करोति कान्तप्रतिभाऽतिसारम् ॥ ३६ ॥

अतीतान्तेत एतां ते तंतन्तु तततातर्ति ।
ऋततां तां तु तोतोत्तु तातोऽततां ततोऽन्ततुत्॥३७॥ एकव्यञ्जनः.

तुद मे ततदम्भत्वं त्वं भदन्ततमेद ! तु ।
रक्ष तात विशामीश ! शमीशाऽऽविततताक्षर ! ॥ ३८ ॥

प्रतिलोमविलोमश्लोकः.

लुलल्लीलाकलाकेलिकीला केलिकलाकुलम् ।
लोकालोकाऽकलङ्काऽलं कोकिलालिकुलाऽलका ॥३९॥ द्व्यक्षरः.

भवताभवता विश्वं नीरागेण बताऽवता ।
मुक्ता मुक्तालतायुक्ता कान्ता कान्ता जगद्गुरो ! ॥४०॥ युग्मम्.

महाऽमदं भवाराऽगहरिं विग्रहहारिणम् ।
प्रमोदजाततारेनं श्रेयस्करं महाप्तकम् ॥ ४१ ॥

---

१ अतीतोऽतिक्रान्तोऽन्तो येन सोऽतीतान्तो मोक्षः, तमितः प्राप्तः तथाभूतो भगवान्, एताम्—तता—विस्तीर्णा चासौ ता—लक्ष्मीश्च तस्यास्ततिम्-वितानमृततां सत्यतां तु—पुनः ते—तुभ्यं तंतन्तु भृशं तनोत्वित्यर्थः ; ततस्तदनन्तरमन्ततुत् तातः—पूज्यो न विद्यते ता—लक्ष्मीर्यत्र स, तस्य भावोऽतता—दरिद्रता तां तोतोत्तु—भृशं तुदत्वित्यर्थः । २ हे ईद-श्रीद ! भदन्ततम-पूज्यतम ! आ-समन्ताद् विततमक्षरम्-ज्ञानं यस्य स आविततताक्षर ! मे ततदम्भत्वम्—विशालकपटत्वं तुद -पीडयेत्यर्थः,। ३ महांश्चासावमः—रोगश्च तं द्यति, तम्, भवशत्रुसमूहपर्वतवज्रिणम्; शरीरमनोहरम्; प्रभा—सज्ज्ञानमेवोदजातम्—जलजं तस्मै तारेनम्—दीप्यमानसूर्यमिवेत्यर्थः; आप्तं कम्—सुखं येन तम्, मह—पूजयेत्यर्थः ।

महाम दम्भवाराऽगहरिं विग्रहहारिणम् ।
प्रमोदजाततारेनं श्रेयस्करं महाप्तकम् ॥ ४२ ॥ महायमकम्.

इति भक्तिरागवशगेन चेतसा
विनुतिं विधाय विरतेऽथ माधवे
जिननेमिरारभत धर्मदेशना-
ममृतोपमां सकलसंशयापहाम् ॥ ४३ ॥

दिवसो यथा न हि विना दिनेश्वरं
सुकृतं विना न च भवेत् तथा सुखम् ।
तदवश्यमेव विदुषा सुखार्थिना
सुकृतं सदैव करणीयमादरात् ॥ ४४ ॥

सुकृतात्सदैव वशवर्तिनीन्दिरा
सुकृताद् यशांसि विचरन्ति भूतले ।
सुकृताद् भवन्ति सकलाऽर्थसिद्धयः
सुकृतात् पदं परममाप्यते खलु ॥ ४५ ॥

गद आपदिष्टविरहो दरिद्रता
विभवक्षयो रिपुपराभवः सदा ।
परगेहकर्मकरता दुराधयो
भविनां भवन्ति भुवि पातकोदयात् ॥४६॥

विघटते स्वजनश्च सुहृज्जनो
विघटते च वपुर्विभवोऽपि च ।
विघटते न हि केवलमात्मनः
सुकृतमत्र परत्र च संचितम् ॥ ४७ ॥

इत्यादि नेमीश्वरधर्मदेशनां

---

१ कपटसमूह एव तरुस्तस्मै वात इव तम्, विरोधनाशिनम्, प्रमोदसमूहतारापतिम्, आप्त एवाप्तकः, महाश्चासावाप्तश्च, तं महाम- वय पूजयाम ।

पारं भवाब्धेस्त्वरितं यियासवः ।
श्रुत्वा व्रतं केऽपि जनाः प्रपेदिरे
गृहस्थधर्मं मुदिताश्च के च न ॥ ४८ ॥
उत्थाय नत्वाऽथ जिनाधिनाथ-
मित्युग्रसेनाङ्गभवा जगाद ।
प्रसीद कृत्यं दिश विश्वनाथ!
विधेहि नित्यं सहचारिणीं माम् ॥ ४९ ॥
ततो जिनेन्द्रः करुणार्द्रचित्तो
विधाय चारित्ररथाधिरूढाम् ।
तां प्राहिणोत् सिद्धिपुरं परं तद्
यियासितं निर्मलमात्मना यत् ॥ ५० ॥
अमितभविकलोकं तारयित्वा भवाब्धेः
प्रभुरपि सुरभृत्यामार्हतर्द्धिं च भुक्त्वा ।
परमपदमयासीत् क्षीणनिःशेषकर्मा
मिमिलिषुरिव सद्यः सौवपूर्वप्रियायाः ॥५१॥
तत्रानन्तं विगमरहितं शाश्वतानन्दरूपं
सौख्यं भुङ्क्ते त्रिभुवनगुरुर्यच्छरीरादिमुक्तः ।
पिण्डीभूतं मनुजमरुतामप्यशेषं समन्तात्
सौख्यं यन्नो तुलयितुमलं दूरमुक्तोपमानम् ५२
काव्याभ्यासनिमित्तं श्रीनेमिजिनेन्द्रचरितपरिपूतम्.
श्वेताम्बरेण रचितं काव्यमिदं कीर्तिराजेन॥५३॥

इति श्रीकीर्तिराजोपाध्यायविरचिते श्रीनेमिजिनचरिते महाकाव्ये जनार्द-
नागमन–तत्कृतस्तुति–प्रभुमोक्षवर्णनो नाम द्वादश. सर्गः



YASHOVIJAYA JAINA GRANTHAMALA, 19.

# THE NIRBHAYABHIMAVYAYOGA

OF

SHREE RAMACHANDRA SURI

EDITED

UNDER THE BENIGN INFLUENCE AND PATRONAGE

OF

SHASTRAVISHARAD JAINACHARYA

**SHREE VIJAYA DHARMA SURI**

BY

HIS HOLINESS' MOST DEVOTED SERVANTS,

**SHRAVAK PANDIT HARGOVINDDAS**

AND

**SHRAVAK PANDIT BECHARDAS.**

PRINTED AND PUBLISHED

BY

HARSHCHAND BHURABHAI

PROPRIETOR OF DHARMABHYUDAYA PRESS,

BENARES

Veer–Era, 2437.

Price 4 annas.

# प्रस्तावना ।

व्यायोगो नाम नाटकादिरिव वाक्यार्थाभिनयस्वभाव. प्रेक्ष्य-काव्यान्तर्गतपाठ्यप्रभेदविशेष । यदवोचन्त काव्यानुशासने पाठ्यकाव्यप्रकरणे जगद्गुरव श्रीहेमचन्द्रप्रभव'–"पाठ्य नाटकप्रकरणनाटिकासमवकारेहामृगडिमव्यायोगोत्सृष्टिकाङ्कप्रहसनभाणवीथीसट्टकादि" इति । समस्मार्षुश्च तत्रैव–

"व्यायोगस्तु विधिज्ञै कार्य प्रख्यातनायकशरीर ।
अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ॥ १ ॥
बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे ।
न तु तत्प्रमाणयुक्त कार्यस्त्वेकाङ्क एवायम् ॥ २ ॥
न च दिव्यनायककृत कार्यो राजर्षिनायकनिबद्ध ।
युद्धनियुद्धाधर्षणसंघर्षकृतश्च कर्तव्य " ॥ ३ ॥

इत्येतेन श्लोकत्रयेण नाट्यशास्त्रेऽष्टादशाध्यायनिरूपितं तत्स्वरूपनिरूपणमपि । तदेतल्लक्षणलक्षितस्यैतस्य व्यायोगनियोगिनो ग्रन्थस्य ग्रन्थितारो महाकवय. श्रीरामचन्द्रसूरयोऽभूवन् । येषां नाट्यलक्षणनिर्माणपातालावगाढसाहित्याम्भोनिधीना शतसख्यप्रबन्धनिबन्धनिबन्धना कुन्देन्दुसुन्दरा कीर्त्तिर्विद्वज्जनमन.सदस्सु सदैव नरीनर्त्ति ।

एते च शाब्दिकतार्किकसैद्धान्तिकालङ्कारिकचक्रचक्रवर्तिसमर्चितचरणारविन्दानां निरस्तसमस्तवादिवृन्दाना सर्वविषयशास्त्रससूत्रणसूत्रधाराणां विश्वविश्वविख्याताऽभिख्यानां पूज्यानामपि पूज्यतमाना कलिकालसर्वज्ञश्रीहेमचन्द्रप्रभूणां पट्टयोग्या विनेयमूर्धन्या निरवद्यविद्याविस्मायितभूपभूयिष्ठगोष्ठीप्रतिष्ठितगरिष्ठकृष्टयश्च समभूवन्निति प्रथिष्ठप्रतिष्ठानां पटिष्ठप्रष्ठाना वचनरचनाभि सुस्पष्ट निष्टङ्क्यते । तथाहि

१ निर्णयसागरमुद्रिते पृष्ठ-३१७–३२३

श्रीप्रभाचन्द्रसूरिविरचिते[1] श्रीप्रभावकचरित्रे द्वाविंशे शृङ्गे—

"राज्ञा श्रीसिद्धराजेनाऽन्यदाऽनुयुयुजे प्रभुः ।
भवतां कोऽस्ति पट्टस्य योग्यः शिष्यो गुणाधिकः ? ॥ १२९ ॥
तमस्माकं दर्शयत चित्तोत्कर्षाय मामिव ।
अपुत्रमनुकम्पार्हं पूर्वे त्वां मा स्म शोचयन् ॥ १३० ॥
आह श्रीहेमचन्द्रश्च न कोऽप्येव हि चिन्तकः ।
आद्योऽप्यभूदिलापालः सत्पात्राम्भोधिचन्द्रमाः ॥ १३१ ॥
सज्ज्ञानमहिमस्थैर्यं मुनीनां किं न जायते ? ।
कल्पद्रुमसमे राज्ञि त्वयीदृशि कृतिस्थितौ ॥ १३२ ॥
अस्त्यामुष्यायणो रामचन्द्राख्यः कृतिशेखरः ।
प्राप्तरेखः प्राप्तरूपसङ्घे विश्वकलानिधिः ॥ १३३ ॥
अन्यदाऽदर्शयंस्तेऽमुं क्षितिपस्य स्तुतिं च सः ।
अनुक्तामाद्यविद्वद्भिर्हृल्लेखाधायिनीं व्यधात् ॥ १३४ ॥

तथाहि—

मात्रयाऽप्यधिकं किञ्चिद् न सहन्ते जिगीषवः ।
इतीव त्वं धरानाथ ! धारानाथमपाकृथाः ॥ १३५ ॥
शिरोधूननपूर्वं च भूपालोऽत्र दृशं दधौ ।
रामे वामेतराचारो विदुषां महिमस्पृशाम् ॥ १३६ ॥
एकदृष्टिर्भवान् भूयाद् वत्स ! जैनेन्द्रशासने ।
महापुण्योऽयमाचार्यो यस्य त्वं पदरक्षकः ॥ १३७ ॥
इत्युक्त्वा विरते राज्ञि" । इति

---

१ यत्तु निर्णयसागरमुद्रितेऽस्मिन् कर्तुर्नाम चन्द्रप्रभसूरिरिति प्रसेधितम् । तच्चिन्त्यम् । अस्यैव "श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभाचन्द्रः सूरिरनेन" इत्यादिषु प्रतिशृङ्गस्यान्तिमश्लोकेषु प्रभाचन्द्रसूरेरेव कर्तृत्वेन, चन्द्रप्रभसूरेस्तु कर्तुर्गुरुत्वेन साक्षाल्लक्ष्यमाणत्वात् । अन्यत्राऽप्येव भूयोऽशुद्धतया संपादितत्वेन नैतद् विश्रम्भावष्टम्भत्वमर्हति । एतन्निर्माणसमयश्च विक्रमसंवत् १३३४ रूप इति कर्तैव
"वेदानलशिखिशशधरवर्षे चैत्रस्य धवलसप्तम्याम् ।
शुक्रे पुनर्वसुदिने संपूर्णं पूर्वर्षिचरितम्" ॥ २२ ॥
इत्येतेव प्रशस्तिप्रान्तप्राप्तेन श्लोकेन प्रत्यपीपदत् ।

श्रीमेरुतुङ्गाचार्यविहितश्रीप्रबन्धचिन्तामणावपि तृतीये सर्गे–

"एकदा श्रीसिद्धेन रामचन्द्र पृष्ट – ग्रीष्मे दिवसा कथ गुरुतरा ? ।
रामचन्द्र प्राह—

देव ! श्रीगिरिदुर्गमल्ल ! भवतो दिग्जैत्रयात्रोत्सवे
धावद्वीरतुरङ्गवल्गनखुरक्षुण्णक्ष्मामण्डलात् ।
वातोद्धूतरजोमिलत्सुरसरित्संजातपङ्कस्थली-
दूर्वाचुम्बनचञ्चुरा रविहयास्तेनाऽतिवृद्ध दिनम् ॥ १ ॥

लब्धलक्षा विपक्षेषु विलक्षास्त्वयि मार्गणा ।
तथापि तव सिद्धेन्द्र ! दातेत्युत्कन्धरं यश " ॥ २ ॥

"अथ श्रीपालकविना सहस्रलिङ्गसरोवरस्य रचिताया प्रशस्तिपट्टिकाया-मुत्कीर्णाया तत्स्थकाव्यमिदम्—

न मानसे मायति मानस मे पम्पा न सम्पादयति प्रमोदम् ।
अच्छोदकाच्छोदकमत्र सार विराजते कीर्तितासिद्धिभर्तु ॥ १ ॥

तत्प्रशस्तिशोधनाय सर्वदर्शनेष्वाहूयमानेषु श्रीहेमचन्द्राचार्यै सर्वविद्वज्जनानुमते प्रशस्तिकाव्ये भवता वैदग्ध्य किमपि न प्रकाश्यमित्युक्त्वा पण्डितरामचन्द्रोऽनु-शिष्यस्तत्र प्रहित । तत सर्वविद्वद्भि शोध्यमानाया प्रशस्तौ नृपोपरोधात् श्रीपालकवे-र्दक्ष्यदाक्षिण्याच्च सर्वेषु काव्येषु मन्यमानेषु

कोशेनाऽपि युत दलैरुपचितं नोच्छेत्तुमेतत्क्षमं
स्वस्यापि स्फुटकण्टकव्यतिकर पुस्त्व च धत्ते नहि ।
एकोऽप्येष करोति कोशरहितो निष्कण्टकं भूतल
मत्वैवं कमला विहाय कमल यस्याऽसिमाशिश्रियत् ॥ १ ॥

विशेषेणाऽस्मिन् काव्ये प्रशस्यमाने श्रीसिद्धराजेन पृष्ट श्रीरामचन्द्रः चिन्त्यमेतत् ' इत्यवादीत् । अथ तैरेव सर्वैरनुयुक्त । एतस्मिन् काव्ये सैन्य-

---

१ अय ग्रन्थो विक्रमार्काच्चन्द्रर्तुपावकेन्दुपरिमिते १३६१ परिवत्सरे तद्वि-निर्मातृभिर्विनिर्मात इति

"त्रयोदशस्वब्दशतेषु चैकषष्ट्याधिकेषु क्रमतो गतेषु ।
वैशाखमासस्य च पूर्णिमाया ग्रन्थ समाप्ति गमितो मितोऽयम् " ॥ १ ॥

एतेनैव तस्य प्रान्तभागविनिर्दिष्टेन पद्येन समधिगम्यते ।

वाचको दलशब्द, कमलशब्दस्य (च) नित्यक्लीबत्वमिति दूषणद्वयं चिन्त्यम्" इत्यादि ॥

एतेन च निर्विवादापवादसंवादेन **श्रीहेमचन्द्रप्रभूणां** समय एवाऽमीषां तत्पट्टधुराधौरेयतामाभेजुषां विद्वत्प्रकाण्डीभूयमासेदुषां ग्रन्थमेनमातेनुषा **श्रीरामचन्द्रसूरीणां** समय. सम्यक् समवगम्यते। प्रभुसमयश्च–

"शरवेदेश्वरे वर्षे कार्तिके पूर्णिमानिशि ।
जन्माऽभवत् प्रभोर्व्योमबाणशम्भौ व्रतं तथा ॥ १ ॥
रसषट्केश्वरे सूरिप्रतिष्ठा समजायत ।
नन्दद्वयरवौ वर्षेऽवसानमभवत् प्रभो " ॥ २ ॥

इति **प्रभावकचरित्रतः**, [2]अपरापरानल्पग्रन्थेभ्यश्च विक्रमाद् द्वादशशताब्दीरूपो विनिर्णीत एव ।

यद्यपि चैतद्ग्रन्थकर्तृभि कवितृभि प्रणीतानां ग्रन्थानामियत्ता नाऽद्यापि विनिश्चिता, तथापि तेषां प्रबन्धशतकर्तृत्वं स्वैरेव तैरत्र[3]ऽपरत्र[4] च ग्रन्थेषु प्रतिज्ञातम्, विज्ञापित चान्यैरपि भूरिभि. सूरिभि. प्रसङ्गसङ्गतेषु तेषु तेषु स्थलविशेषेषु सविशेषमुल्लेखमादधद्भि । इत्यतस्ते शत वा ततोऽप्यधिकान् वा प्रबन्धनिबन्धान् निबबन्धुरिति निर्विशङ्क प्रतिभाति। येष्वेतदतिरिक्ता–द्रव्यालङ्कार. सटीक, नाट्यदर्पणम्, सत्यहरिश्चन्द्रनाटकम्, कुमारविहारशतकम्, राघवाभ्युदयम्, यादवाभ्युदयम्, नलविलासम्, रघुविलापम्, कौमुदीमित्राणन्दप्रकरणम्, इत्येतावन्तः श्रूयन्ते, प्राय. समुपलभ्यन्ते च। शेषाणामप्यशेषाणा विशेषेण गवेषणा महोपयोगिनी अत्यावश्यकी च वर्तते ।

---

१ पुंनपुसकलिङ्गत्वेनाऽस्य नैकान्तक्लीबत्वमिति भाव । तथा च लिङ्गानुशासने पुनपुंसकप्रकरणे **हेमचन्द्रप्रभव** " कमलं मलं मुसलशालकुण्डला " इति ।
२ प्रबन्धचिन्तामणि– कुमारपालचरित्र-- हेमकुमारचरित्र-- तपागच्छपट्टावल्यादित ।
३ प्रबन्धशतकर्तुर्महाकवे **रामचन्द्रस्येति** पृ० १ । ४ कृतिरियं प्रबन्धशकर्तुर्महाकवे **रामचन्द्रस्येति** सत्यहरिश्चन्द्रनाटके, प्रबन्धशतविधाननिष्णातबुद्धिना श्रीमता **रामचन्द्रेण** विरचितामिति कौमुदीमित्राणन्दप्रकरणे ॥

पूज्याचार्यवर्याणां चैतेषां ग्रन्थकर्तृणां त्रिदशसदनासादनसमयस्तु—

विक्रमार्काद् गगनदहनतपनमिते (१२३०) वर्षे दिव प्राप्तवति परमार्हते श्रीकुमारपालक्ष्मापाले तद्भ्रातुष्पुत्रोऽजयदेवो राज्येऽभ्यषिच्यत । तेन तत्प्राज्यराज्याहङ्कारान्धकारान्धीभूतेन अदभ्रं बभ्रंता निसर्गपरिपुष्टदुष्टाध्यवसायपरम्पराम्, अतुच्छमुच्छिन्दता सारासारविचारचारुचारिताम्, समूलमुन्मूलयता धर्माभिरामारामरमणीयताम्, तूर्णं सचूर्णयता स्ववंशोद्भूतप्रभूतभूपसमुद्भावितानि यशःस्तम्भायमानानि धर्मसंस्थानानि, सुदूरमुत्सारयता राजनीतिम्, बाढं कलङ्कयता कुलं सौवम्, सर्वत्र विस्तारयता निजान्यङ्गारमलीमसानि दुर्यशासि, किं बहुना? दुष्कृत्यमर्यादामप्यससरीसृजता संसरीस्पृशता च निष्कारणवैरितां बहून् धार्मिकोत्तमान् सत्तमान् परास्यता परमाधमाधमेन कर्मचण्डालेन दुर्गतिप्रस्थानमेव संस्थापयता अप्रतिमप्रतिभासभारविभवविभवो निःसाधारणधैर्यधारिणोऽगण्यगुणगणसमलङ्कृता एते सूरयोऽप्यघानिषत । अथ च "अतीवोद्भूतपापानि न फलन्ति विलम्बतः" इत्युक्तिं सत्यापयन् स एष मुनिहत्यामहापातकी अत्युत्कटमर्मणो निजकर्मणः सुनिश्चितदुर्गतिदारुणफलस्य पुष्पमिव स्वप्रतीहारप्रहृतक्षुरिकया सक्षुण्णं सन्निहैव निरयवेदनां संवेदयन् यमसद्म समासदत् । यत् प्रबन्धचिन्तामणौ चतुर्थे सर्गे—

"सं० ११९९ वर्षाद् वर्ष ३१ श्रीकुमारपालदेवेन राज्य कृतम्॥ सं० १२३० वर्षेऽजयदेवोऽभिषिक्त"। "अथ श्रीप्रबन्धशतकर्ता रामचन्द्रस्तु तेन भूपापसदेन तप्तताम्रपट्टिकाया निवेश्यमान॰

मंहिवीढह सचराचरह जिण सिरि दिण्हा पाय ।
तसु अत्थमणु दिणेसरह होउत होइ चिराय ॥ १ ॥

इत्युदीर्य दशनाग्रेण रसना छिन्दन् विपन्न एव व्यापादयाञ्चक्रे" ॥

"त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभि पक्षैस्त्रिभिर्दिनै ।
अत्युग्रपुण्यपापानामिहैव फलमश्नुते" ॥ १ ॥

इति प्रमाणोक्तप्रामाण्यात् स कुपतिर्वयजलदेवनाम्ना प्रतीहारेण क्षुरिकया हतो धर्मस्थानपातकी कृमिभिर्भक्ष्यमाण प्रत्यह नरकमनुभूय परोक्षता प्रपेदे ।

---

१ महीपीठे सचराचरे येन श्री दत्ता प्राय ।
तस्याऽस्तंगमनं दिनेश्वरस्य भाव्यं भवत्येव चिराय ॥ १ ॥

सं० १२३० पूर्ववर्षादजयदेवेन वर्ष ३ राज्य कृतम् " ॥

इत्येतेन तद्वर्षत्रितयमध्य एवेति प्रकटमेव प्रतीतिमार्गमवगाहते ।

ग्रन्थस्याऽस्य मुद्रणावसरे हस्तलिखितमादर्शपुस्तकमेकं मुनिराजश्रीभक्तिविजयत, एकं च श्रेष्ठिवर्यहीराचन्द्रात्मजवाडीलालद्वारा श्रीअणहिल्लपुरपत्तन( पाटण )स्थश्रीझवेरीवाडापार्श्वनाथाख्यभाण्डागारत समुपालप्स्वहि, इत्यत्र विषये ताभ्यां मान्यवराभ्यां भृशमनुगृहीतौ स्व ।

एव च पुस्तकोभयीसाहाय्येन संशोध्य पाठान्तरैः परिष्कृत्य च्छायादिना विशदीकृत्य च सपादितेऽप्यस्मिन् ग्रन्थे याः काश्चिदशुद्धय. स्थिता भवेयुः, प्रकृतिकृपालव सहृदयास्ताः शोधयिष्यन्तीति–

प्रार्थयेते—

हरगोविन्द–बेचरदासौ ।

अर्हम्

श्रीविजयधर्मसूरिभ्यो नमः ।

# अथ अभिधानचिन्तामणिकोशस्थशब्दानामकारादि-क्रमेण सूचिपत्रम् ।

४

| श० | का० | श्लो० | श० | का० | श्लो० |
|---|---|---|---|---|---|
| आडम्बर | ३ | ४६३ | आत्मन् | ६ | १२ |
| आढक | ३ | ५५० | आत्मप्रवाद | २ | १६१ |
| आढकिक | ४ | ३५ | आत्मभू | २ | १२७ |
| आढकी | ४ | १२२ | आत्मभू | २ | १३१ |
| आढकी | ४ | २४१ | आत्मम्भरि | ३ | ९१ |
| आढ्य | ३ | २१ | आत्मयोनि | २ | १४३ |
| आणवीन | ४ | ३२ | आत्माशिन् | ४ | ४१० |
| आतङ्क | २ | २१५ | आत्मीय | ३ | २२६ |
| आततायिन् | ३ | ३६ | आत्रेय | ३ | २८४ |
| आतप | २ | १५ | आत्रेयी | ३ | १९९ |
| आतपवारण | ३ | ३८१ | आथर्वण | ४ | ६३ |
| आतर | ३ | ५४३ | आदर्श | ३ | ३४८ |
| आतापिन् | ४ | ४०० | आदि | ६ | ९५ |
| आति | ४ | ४०४ | आदितेय | २ | २ |
| आतिथेयी | ३ | १६३ | आदित्य | २ | २५ |
| आतिथ्य | ३ | १६३ | आदित्य | २ | ९ |
| आतुर | ३ | १२३ | आदित्यसूनु | ३ | ३६९ |
| आतोद्य | २ | २०० | आदिम | ६ | ९४ |
| आत्तगन्ध | ३ | १०४ | आदिराज | ३ | ३६४ |
| आत्मगुप्ता | ४ | २१७ | आदीन | ६ | ११ |
| आत्मघोष | ४ | ३८८ | आदेश | २ | १९१ |
| आत्मज | ३ | २०६ | आदेशिन् | ३ | १४६ |
| आत्मदर्श | ३ | ३४८ | आदेष्टृ | ३ | ४८१ |
| आत्मन् | ६ | २ | आद्य | ६ | ९४ |

ऋ०

| श० | का० | श्लो० |
|---|---|---|
| खेय | ४ | १६१ |
| खेलनी | ३ | १५१ |
| खेला | ३ | २२० |
| खोङ्गाह | ४ | ३०३ |
| खोड | ३ | ११९ |
| खोर | ३ | ११९ |
| ख्यात | ६ | १२९ |

ग०

| श० | का० | श्लो० |
|---|---|---|
| गगन | २ | ७७ |
| गगनध्वज | २ | ११ |
| गगनाध्वग | २ | ११ |
| गङ्गा | ४ | १४७ |
| गङ्गाभृत् | २ | ११३ |
| गङ्गासुत | २ | १२२ |
| गच्छ | ४ | १८० |
| गज | १ | ४७ |
| गज | ३ | ४१५ |
| गज | ४ | २८३ |
| गजता | ६ | ५८ |
| गजप्रिया | ४ | २१८ |
| गजास्य | २ | १२१ |
| गजाजीव | ३ | ४२६ |
| गजासुहृद् | २ | ११४ |
| गजाह्वय | ४ | ४४ |
| गञ्जा | ४ | ६७ |
| गञ्जा | ४ | १०२ |
| गडक | ४ | ४११ |
| गडु | ३ | १३० |
| गडुल | ३ | ११७ |
| गडूची | ४ | २२३ |
| गडोल | ३ | ८९ |
| गण | २ | ११५ |
| गण | ६ | ४७ |
| गणक | ३ | १४६ |
| गणग्राम | ६ | ५० |
| गणरात्र | २ | ५७ |
| गणि | १ | ७८ |
| गणिका | ३ | १९६ |
| गणिकापति | ३ | १८३ |
| गणिपिटका | २ | १५९ |
| गणेय | ३ | ५३६ |
| गणेश | २ | १२१ |
| गण्ड | ३ | १३० |
| गण्ड | ३ | २४६ |
| गण्ड | ४ | २९१ |
| गण्डक | ४ | ३५३ |
| गण्डमाल | ३ | १३१ |
| गण्डशैल | ४ | १०२ |

घ०

| श० | का० | श्लो० |
|---|---|---|
| द्वारपालक | ३ | ३८५ |
| द्वारयन्त्र | ४ | ७१ |
| द्वारवती | ४ | ४६ |
| द्वारस्थ | ३ | ३८५ |
| द्विक | ४ | ३८८ |
| द्विककुद् | ४ | ३२० |
| द्विज | ३ | २४७ |
| द्विज | ३ | ४७१ |
| द्विज | ३ | ४७६ |
| द्विज | ४ | ३८२ |
| द्विजपति | २ | १८ |
| द्विजन्मन् | ३ | ४७६ |
| द्विजब्रुव | ३ | ५१९ |
| द्विजाति | ३ | ४७६ |
| द्विजिह्व | ·३ | ४४ |
| द्विजिह्व | ४ | ३६९ |
| द्वितय | ६ | ५९ |
| द्वितीया | ३ | १७७ |
| द्विदत् | ४ | ३२९ |
| द्विधागति | ४ | ४१८ |
| द्विनम्रक | ३ | ११८ |
| द्विप | ४ | २८३ |
| द्विपथ | ४ | ५२ |
| द्विपाद्य | ३ | ४०९ |
| द्विपृष्ठ | ३ | ३५९ |

| श० | का० | श्लो० |
|---|---|---|
| द्विरद | ४ | २८३ |
| द्विरद | ४ | ३२९ |
| द्विरेफ | ४ | २७८ |
| द्विविद | २ | १३४ |
| द्विष् | ३ | ३९३ |
| द्विषत् | ३ | ३९३ |
| द्विसहस्राक्ष | ४ | ३७३ |
| द्विहल्य | ४ | ३४ |
| द्विहायनी | ४ | ३३८ |
| द्वीप | ४ | १४४ |
| द्वीपकुमार | २ | ४ |
| द्वीपवती | ४ | १४६ |
| द्वीपिन् | ४ | ३५१ |
| द्वेष | २ | ७३ |
| द्वेषिन् | ३ | ३९३ |
| द्वेष्य | ३ | १११ |
| द्वैगुणिक | ४ | ५४४ |
| द्वैध | ३ | ३९९ |
| द्वैप | ३ | ४१९ |
| द्वैपायन | ३ | ५११ |
| द्वैमातुर | २ | १२१ |
| द्वैमातुर | ३ | २१० |
| द्व्यष्ट | ४ | १०५ |

| श० | का० | श्लो० |
|---|---|---|
| पदाति | ३ | १६१ |
| पदातिक | ३ | १६१ |
| पदासन | ३ | ३८२ |
| पादिक | ३ | १६२ |
| पद्ग | ३ | १६१ |
| पद्धति | २ | १७१ |
| पद्म | २ | १०७ |
| पद्म | ३ | ३५७ |
| पद्म | ३ | ३६२ |
| पद्म | ४ | ११६ |
| पद्म | ४ | २९५ |
| पद्मनाभ | १ | ५३ |
| पद्मनाभ | २ | १२९ |
| पद्मनाल | ४ | २३१ |
| पद्मप्रभ | १ | २६ |
| पद्मभू | २ | १२७ |
| पद्मराग | ४ | १३० |
| पद्मवासा | २ | १४० |
| पद्मा | १ | ४० |
| पद्मा | २ | १४० |
| पद्माकर | ४ | १६० |
| पद्मावती | १ | ४६ |
| पद्मेशय | २ | १२९ |
| पद्मोत्तरात्मज | ३ | ३५७ |

| श० | का० | श्लो० |
|---|---|---|
| पद्य | ३ | ५५८ |
| पद्या | ४ | ४९ |
| पन्न | ६ | १२७ |
| पन्नग | ४ | ३७० |
| पन्नद्धा | ३ | ५७८ |
| पयस् | ३ | ६८ |
| पयस् | ४ | १३५ |
| पयस्य | ३ | ६९ |
| पयस्या | ३ | ४९५ |
| पयोधर | ३ | २६७ |
| परःशत | ६ | ६१ |
| पर | ३ | ३९२ |
| पर | ६ | ७५ |
| पर | ६ | ८८ |
| परच्छन्द | ३ | २० |
| परजात | ३ | २५ |
| परञ्जन | २ | १०२ |
| परतन्त्र | ४ | २० |
| परपिण्डाद | ३ | २५ |
| परभाग | ६ | ११ |
| परभृत | ४ | २८७ |
| परमान्न | ३ | ७० |
| परमार्हत | ३ | २७६ |
| परमेष्ठिन् | १ | २८ |

| श० | का० | श्लो० | श० | का० | श्लो० |
|---|---|---|---|---|---|
| परमेष्ठिन् | १ | २४ | परायत्त | ३ | २० |
| परमेष्ठिन् | २ | १२५ | परायण | ३ | ४९ |
| परम्पर | ३ | २०८ | परार्ध | ३ | ५३८ |
| परम्पराक | ३ | ४९४ | परार्ध | ६ | ७५ |
| परलोकगम | २ | २३७ | परावर्त | ३ | ५३४ |
| परवत् | ३ | २० | परावृत्त | ४ | ३११ |
| परवश | ३ | २० | परासन | ३ | ३४ |
| परशु | ३ | ४५० | परासु | ३ | ३८ |
| परश्वध | ३ | ४५० | परास्कन्दिन् | ३ | ४६ |
| परश्वधायुध | ३ | ४३४ | परिकर | ३ | ३४३ |
| परस्परम् | ६ | १३५ | परिकर | ३ | ३७९ |
| पराक्रम | ३ | ४०३ | परिकर्मन् | २ | १६० |
| पराक्रम | ३ | ४६० | परिकर्मन् | ३ | २९९ |
| पराग | ४ | १९२ | परिकार्मिन् | ३ | २४ |
| पराङ्मुख | ६ | ७३ | परिकूट | ४ | ४८ |
| पराचित | ३ | २४ | परिक्रम | ६ | १३६ |
| पराचीन | ६ | ७३ | परिक्षिप्त | ६ | ११० |
| पराजय | ३ | ४६७ | परिखा | ४ | १६१ |
| पराजित | ३ | ४६९ | परिग्रह | ३ | १७७ |
| पराधीन | ३ | २० | परिग्रह | ३ | २७९ |
| परान्न | ३ | २५ | परिघ | ३ | ४५० |
| पराभव | ३ | १०५ | परिघ | ४ | ७० |
| पराभूत | ३ | ४६९ | परिघातन | ३ | ४५० |
| परामर्श | २ | २३६ | परिचय | ६ | १७९ |

| श० | का० | श्लो० | श० | का० | श्लो० |
|---|---|---|---|---|---|
| पर्वताधारा | ४ | ३ | पलिक्नी | ४ | ३२६ |
| पर्वन् | २ | ६२ | पलित | ३ | १३५ |
| पर्वम् | ४ | १९६ | पल्यङ्क | ३ | ३४७ |
| पर्वमूल | २ | ६२ | पल्ययत | ४ | ३१८ |
| पर्वसन्धि | २ | ६३ | पल्लव | ४ | १८९ |
| पर्वयोनि | ४ | २६६ | पल्लविक | २ | २४५ |
| पर्शु | ३ | ४५० | पल्ली | ४ | ३६४ |
| पर्शुक | ३ | २९१ | पल्वल | ४ | १६१ |
| पर्शुपाणि | २ | १२६ | पव | ६ | १५७ |
| पर्श्वध | ३ | ४५० | पवन | ४ | ८३ |
| पर्षद् | ३ | १४५ | पवन | ४ | १७२ |
| पल | ३ | २८७ | पवन | ६ | १५७ |
| पल | ३ | ५४८ | पवनाशन | ४ | ३६९ |
| पल | ४ | २४८ | पवमान | ४ | १७२ |
| पलाण्ड | ३ | ५८६ | पवि | २ | ९४ |
| पलङ्कष | ४ | २०८ | पवित्र | ४ | २५८ |
| पलङ्कषा | ३ | ३४९ | पावित्र | ६ | ७१ |
| पलल | ३ | २८६ | पशु | ४ | ३४१ |
| पलाद | २ | १०१ | पशुक्रिया | ३ | २०१ |
| पलायन | ३ | ४६६ | पशुपति | २ | ११३ |
| पलायित | ३ | ४६९ | पश्चात्ताप | ६ | १४ |
| पलाल | ४ | २४८ | पश्चिम | ६ | ९५ |
| पलाश | ४ | १८९ | पश्चिमा | २ | ८१ |
| पलिक्नी | ३ | १९८ | पश्यतोहर | ३ | ३६ |

जं तेहिं दायव्वं तं दिन्नं जिणवरेहिं सव्वेहिं ।
दसण-नाण-चरित्तस्स एस तिविहस्स उवएसो ॥ ५५ ॥
भत्तीइ जिणवराण परमाए खीणपिज्ज-दोसाण ।
आरुग्ग-बोहिलाभं समाहिमरण च पावंति ॥ ५६ ॥
भत्तीइ जिणवराण खिज्जंति पुव्वसंचिआ कम्मा ।
आयरिअनमुक्कारेण विज्जा-मता य सिज्झंति ॥ ५७ ॥
लद्धिल्लिअ च बोहिं अकरितोऽणागय च पच्छितो ।
दच्छिसि जह त भिभला ! इम च अन्न च चुक्किहिसि ॥ ५८ ॥
लद्धिल्लिअ च बोहिं अकरितोऽणागय च पच्छितो ।
अन्न दाइ बोहिं लब्भिसि कयरेण मुल्लेण [१] ॥ ५९ ॥
चेइअ-कुल गण-सघे आयरिआण च पवयणसुएसु अ ।
सव्वेसु वि तेण कयं तव-सजममुज्जमतेण ॥ ६० ॥
चदा-ऽऽइच्च-गहाण पहा पयासेइ परिमिअ खित्तं ।
केवलिअनाणलभो लोआ-ऽलोअ पयासेइ ॥ ६१ ॥

॥ चउवीसत्थयनिज्जुत्ती सम्मत्ता ॥

---

यत्तैर्दातव्य तद् दत्त जिनवरै सर्वै ।
दर्शन-ज्ञान-चारित्रस्यैष त्रिविधस्योपदेश ॥ ५५ ॥
भक्त्या जिनवराणा परमया क्षीणप्रेम-द्वेषाणाम् ।
आरोग्य-बोधिलाभं समाधिमरण च प्राप्नुवन्ति ॥ ५६ ॥
भक्त्या जिनवराणा क्षीयन्ते पूर्वसचितानि कर्माणि ।
आचार्यनमस्कारेण विद्या-मन्त्राश्च सिध्यन्ति ॥ ५७ ॥
लब्धिमर्ता च बोधिमकुर्वन्ननागता च प्रार्थयन् ।
द्रक्ष्यसि यथा त्वं विह्वल ! इमा चान्या च भ्रंश्यसि ॥ ५८ ॥
लब्धिमर्ती च बोधिमकुर्वन्ननागता च प्रार्थयन् ।
अन्या बोधि लप्स्यसे कतरेण मूल्येन [१] ॥ ५९ ॥
चैत्य-कुल-गण-संघे आचार्याणा च प्रवचनश्रुतेषु च ।
सर्वेष्वपि तेन कृतं तप -संयममुद्यच्छता ॥ ६० ॥
चन्द्रा-ऽऽदित्य-ग्रहाणा प्रभा प्रकाशयति परिमित क्षेत्रम् ।
केवलिकज्ञानलाभो लोका ऽलोकं प्रकाशयति ॥ ६१ ॥

॥ चतुर्विंशतिस्तवनिर्युक्ति समाप्ता ॥

---

[१] असूयासूचकमव्ययम् ।

वंदण-चिइ-किइकम्मं पूआकम्म च विणयकम्मं च ।
कायव्वं कस्स व केण वावि काहे व कइखुत्तो ? ॥ १ ॥

कइउणयं कइसिरं कइहिं व आवस्सएहिं परिसुद्ध ।
कइदोसविप्पमुक्क किइकम्म कीस कीरइ वा ? ॥ २ ॥

सीअले खुड्डुए कण्हे सेवए पालए तहा ।
पचेए दिट्ठता किइकम्मे हुति नायव्वा ॥ ३ ॥

अस्संजय न वदिज्जा मायर पिअर गुरु ।
सेणावई पसत्थार रायाण देवयाणि अ ॥ ४ ॥

समण वंदिज्ज मेहावी सजय सुसमाहिअ ।
पचसमिअं तिगुत्त असजमदुगछग ॥ ५ ॥

पचण्हं किइकम्म माला-मरुएहि होइ दिट्ठतो ।
वेरुलिअ नाण-दसण-निअयावासेहि जे दोसा ॥ ६ ॥

---

वन्दन-चिति-कृतिकर्म पूजाकर्म च विनयकर्म च ।
कर्तव्यं कस्य वा केन वाऽपि कदा वा कतिकृत्व ? ॥ १ ॥

कत्यवनतं कतिशिर कतिभिर्वाऽऽवश्यकै परिशुद्धम् ।
कतिदोषविप्रमुक्त कृतिकर्म कस्मात् क्रियते वा ? ॥ २ ॥

शीतल क्षुल्लक कृष्ण सेवक पालकस्तथा ।
पञ्चैते दृष्टान्ता कृतिकर्मणि भवन्ति ज्ञातव्या ॥ ३ ॥

असंयत न वन्देत मातर पितर गुरुम् ।
सेनापतिं प्रशास्तारं राजानं दैवतानि च ॥ ४ ॥

श्रमणं वन्देत मेधावी संयतं सुसमाहितम् ।
पञ्चसमितं त्रिगुप्तमसंयमजुगुप्सकम् ॥ ५ ॥

पञ्चाना कृतिकर्म माला-मरुकाभ्या भवति दृष्टान्त ।
वैडुर्यं ज्ञान-दर्शन-नियतावासैश्च ये दोषा. ॥ ६ ॥

पासत्थो ओसण्णो होइ कुसीलो तहेव संसत्तो ।
अहच्छंदो वि अ एए अवंदणिज्जा जिणमयम्मि ॥ ७ ॥
सो पासत्थो दुविहो सव्वे देसे अ होइ नायव्वो ।
सव्वम्मि नाण-दसण-चरणाण जो उ पासम्मि ॥ ८ ॥
देसम्मि अ पासत्थो सिज्जायर भिहड-रायपिंडं च ।
निअय च अग्गपिंड भुजइ निक्कारणे चेव ॥ ९ ॥
कुलनिस्साए विहरइ ठवणकुलाणि अ अकारणे पविसइ ।
सखडिपलोअणाए गच्छइ तह सथव कुणइ ॥ १० ॥
ओसन्नो वि अ दुविहो सव्वे देसे अ तत्थ सव्वम्मि ।
उव्बद्धपीढफलगो ठविअगभोई अ नायव्वो ॥ ११ ॥
आवस्सय-सज्झाये पडिलेहण-ज्झाण-भिक्ख-भत्तट्ठे ।
आगमणे निग्गमणे ठाणे अ निसीअण तुअट्टे ॥ १२ ॥

---

पार्श्वस्थोऽवसन्नो भवति कुशीलस्तथैव ससक्त ।
यथाच्छन्दोऽपि चैतेऽवन्दनीया जिनमते ॥ ७ ॥
स पार्श्वस्थो द्विविध , सर्वस्मिन् देशे च भवति ज्ञातव्य ।
सर्वस्मिन् ज्ञान-दर्शन-चरणाना यस्तु पार्श्वे ॥ ८ ॥
देशे च पार्श्वस्थ शय्यातरा-ऽभिहृत-राजपिण्डं च ।
नियतं चाग्रपिण्ड भुङ्क्ते निष्कारणे चैव ॥ ९ ॥
कुलनिश्रया विहरति स्थापनाकुलानि चाऽकारणे प्रविशति ।
*संखडिप्रलोकनायै गच्छति तथा सस्तव करोति ॥ १० ॥
अवसन्नोऽपि च द्विविध सर्वस्मिन् देशे च तत्र सर्वस्मिन् ।
उद्बद्धपीठफलक स्थापितकभोगी च ज्ञातव्य ॥ ११ ॥
आवश्यक-स्वाध्याये प्रतिलेखन-ध्यान-भिक्षा-भक्तार्थे ।
आगमने निर्गमने स्थाने च निषदने त्वग्वर्ते ॥ १२ ॥

---

१ दर्शनादीना पार्श्वे तिष्ठतीति पार्श्वस्थ , अथवा मिथ्यात्वादयो बन्धहेतव पाशा , पाशेषु तिष्ठतीति पाशस्थ , इति श्रीहरिभद्रपादा आवश्यकविवृतौ ।

संखण्डयन्ते विराध्यन्ते, प्राणिनो यत्र सा सखडि', इति आचाराङ्गटीकाया शीलाङ्काचार्यपादा ।

आवस्सयाइआइं न कुणइ अहवा वि करेइ हीणमहिआइं ।
गुरुवयणवलाई तहा भणिओ एसो उ ओसन्नो ॥ १३ ॥
गोणो जहा वलतो भंजइ समिल तु सो वि एमेव ।
गुरुवयणमकरतो वला इ कुणइ च ओसोढु ॥ १४ ॥
तिविहो होइ कुसीलो नाणे तह दसणे चरित्ते अ ।
एसो अवदणिज्जो पण्णत्तो वीअरागेहि ॥ १५ ॥
नाणे नाणायारं जो उ विराहेइ कालमाईअ ।
दसणे दंसणायारं चरणकुसीलो इमो होइ ॥ १६ ॥
कोऊअ-भूइकम्मे पसिणापसिणे निमित्तमाजीवी ।
कक्ककरुआइलक्खण उवजीवइ विज्जमताई ॥ १७ ॥
सोहग्गाइनिमित्त परेसि न्हवणाइ कोऊअ भणिअ ।
जरिआइभूइदाणं भूइकम्म विनिदिट्ठं ॥ १८ ॥
सुविणयविज्जाकहिअ आइखिणिघटिआइकहिअं वा ।
ज सीसइ अन्नेसिं पसिणापसिण हवइ एअं ॥ १९ ॥

---

आवश्यकादिकानि न करोति अथवाऽपि करोति हीनाधिकानि ।
गुरुवचनप्रलापी तथा भणित एष त्ववसन्न ॥ १३ ॥
गौर्यथा वर्लमानो भनक्ति समिला तु सोऽपि एवमेव ।
गुरुवचनमकुर्वन् बलात् करोति चावसह्य ॥ १४ ॥
त्रिविधो भवति कुशीलो ज्ञाने तथा दर्शने चारित्रे च ।
एषोऽवन्दनीय[१] प्रज्ञप्तो वीतरागै ॥ १५ ॥
ज्ञाने ज्ञानाचारं यस्तु विराधयति कालादिकम् ।
दर्शने दर्शनाचारं चरणकुशीलोऽयं भवति ॥ १६ ॥
कौतुक-भूतिकर्मणि प्रशाप्रश्ने निमित्त आजीवी ।
कर्ककरुतादिलक्षण उपजीवति विद्या-मन्त्रादि ॥ १७ ॥
सौभाग्यादिनिमित्तं परेषा स्नपनादि कौतुक भणितम् ।
ज्वरितादिभूतिदानं भूतिकर्म विनिर्दिष्टम् ॥ १८ ॥
स्वप्नकविद्याकथितं आख्यायिका-घण्टिकादिकथितं वा ।
यत् शिष्यतेऽन्येषा प्रश्नाप्रश्नो भवत्येष ॥ १९ ॥

---

१ ग, इ-इत्यपि ।

तीआइभावकहणं होइ निमित्तं इम तु आजीवं ।
जाइ-कुल-सिप्प-कम्मे तव-गुण-सुत्ताइ सत्तविह ॥ २० ॥
कक्ककरुआ य माया निअडीए डिंभणं ति ज भणिअ ।
थीलक्खणाइलक्खण विज्जा मताइआ पयडा ॥ २१ ॥
ससत्तो अ इआणि सो पुण गो-भत्त-लदए चेव ।
उच्चिट्ठमणुचिट्ठ ज किंची वि छुब्भइ सव्व ॥ २२ ॥
एमेव य मूलुत्तरदोसा य गुणा य जत्तिआ केइ ।
ते तम्मि उ सनिहिआ ससत्तो भण्णइ तम्हा ॥ २३ ॥
रायविदूसगमाइ अहवा वि नडो जहा उ बहुरूवी ।
अहवा विमेलगा उ हलिद्दरागाइबहुवण्णो ॥ २४ ॥
एमेव जारिसेण सुद्धमसुद्धेण वा वि समिलइ ।
तारिसउ च्चिअ होही ससत्तो भण्णइ तम्हा ॥ २५ ॥
सो दुविगप्पो भणिओ जिणेहि जिअराग-दोस-मोहेहिं ।
एगो अ सकिलिट्ठो असकिलिट्ठो तहा अण्णो ॥ २६ ॥

---

अतीतादिभावकथनं भवति निमित्तमिद त्वाजीवम् ।
जाति-कुल-शिल्प-कर्म तपो-गुण-सूत्रादि सप्तविधम् ॥ २० ॥
कर्ककरुता च माया निकृत्या दम्भनमिति यद् भणितम् ।
स्त्रीलक्षणादिलक्षण विद्या-मन्त्रादिका प्रकटा ॥ २१ ॥
संसक्तश्चेदानीं स पुनर्गो भक्त-कलन्दके चेव ।
उत्तिष्ठदनुतिष्ठद् यत् किञ्चिदपि क्षिप्यते सर्वम् ॥ २२ ॥
एवमेव च मूलोत्तरदोषाश्च गुणाश्च यावन्त केऽपि ।
त तस्मिस्तु सनिहिता ससक्तो भण्यते तस्मात् ॥ २३ ॥
राजविदूषकादिरथवाऽपि नटो यथा तु बहुरूपी ।
अथवा विमेलकास्तु हरिद्ररागादिबहुवर्ण ॥ २४ ॥
एवमेव यादृशेन शुद्धाऽशुद्धेन वाऽपि समिलति ।
तादृश एव भविष्यति ससक्तो भण्यते तस्मात् ॥ २५ ॥
स द्विविकल्पो भणितो जिनैर्जितराग द्वेष-मोहै ।
एकश्च संक्लिष्टोऽसंक्लिष्टस्तथाऽन्य ॥ २६ ॥

पंचासवप्पमत्तो जो खलु तिहिं गारवेहिं पडिबद्धो ।
इत्थि-गिहिसंकिलिट्ठो संसत्तो संकिलिट्ठो अ ॥ २७ ॥
पासत्थाईएसु संविग्गेसु च जत्थ मिलइ अ ।
तहि तारिसो उ होइ पिअधम्मो अहव इअरो अ ॥ २८ ॥
उस्सुत्तमायरंतो उस्सुत्तं चेव पण्णवेमाणो ।
एसो अ अहाछंदो इच्छाछंदुत्ति एगट्ठा ॥ २९ ॥
उस्सुत्तमणुवइट्ठं सच्छंदविगप्पिअं अणणुवाई ।
परतत्तिपवत्ते तितिणो अ इणमो अहाच्छंदो ॥ ३० ॥
सच्छंदमइ विगप्पिअ किंचि सुहसायविगइपडिबद्धो ।
तिहि गारवेहि मज्जइ तं जाणाहि अहाच्छंदं ॥ ३१ ॥
पासत्थाई वंदमाणस्स नेव कित्ती न निज्जरा होइ ।
कायकिलेसं एमेव कुणइ तह कम्मबंधं च ॥ ३२ ॥
जे बंभचेरभट्ठा पाए उड्डिंति बंभयारीणं ।
ते हुंति कुंटमंटा बोही अ सुदुल्लहा तेसिं ॥ ३३ ॥

---

पञ्चाश्रवप्रमत्तो यः खलु त्रिभिर्गौरवैः प्रतिबद्धः ।
स्त्री-गृहिसंक्लिष्टः संसक्तः संक्लिष्टश्च ॥ २७ ॥
पार्श्वस्थादिकेषु संविग्नेषु च यत्र मिलति च ।
तत्र तादृशस्तु भवति प्रियधर्मोऽथवेतरश्च ॥ २८ ॥
उत्सूत्रमाचरन् उत्सूत्रमेव प्रज्ञापयमानः ।
एष च यथाच्छन्दः इच्छाच्छन्द इति एकार्थौ ॥ २९ ॥
उत्सूत्रमनुपदिष्टं स्वच्छन्दविकल्पितमननुपाती ।
परतप्तिप्रवृत्तः तिन्तिणश्चाऽयं यथाच्छन्दः ॥ ३० ॥
स्वच्छन्दमत्या विकल्प्य किञ्चित् सुखस्वादविकृतिप्रतिबद्धः ।
त्रिभिर्गौरवैर्मज्जति तं जानीहि यथाच्छन्दम् ॥ ३१ ॥
पार्श्वस्थादीन् वन्दमानस्य नैव कीर्तिर्न निर्जरा भवति ।
कायक्लेशमेवमेव करोति तथा कर्मबन्धं च ॥ ३२ ॥
ये ब्रह्मचर्यभ्रष्टाः पादौ व्यवस्थापयन्ति ब्रह्मचारिणाम् ।
ते भवन्ति कुण्टमण्टा बोधिश्च सुदुर्लभा तेषाम् ॥ ३३ ॥

सुट्ठुअरं नासंति अप्पाणं जे चरित्तपब्भट्ठा ।
गुरुजण वदावति सुस्समण जहुत्तकारि च ॥ ३४ ॥
असुइट्ठाणे पडिआ चपगमाला न कीरइ सीसे ।
पासत्थाइट्ठाणेसु वट्टमाणा तह अपुज्जा ॥ ३५ ॥
पक्कणकुले वसंतो सउर्णापारो वि गरहिओ होइ ।
इअ गरहिआ सुविहिआ मज्झि वसता कुसीलाण ॥ ३६ ॥
सुचिर पि अच्छमाणो वेरुलिओ कायमणिअउम्मीसो ।
न उवइ कायभाव पाहन्नगुणेण निअयेण ॥ ३७ ॥
भावुग-अभावुगागि अ लोए दुविहाणि हुंति दव्वाणि ।
वेरुलिओ तत्थ मणी अभावुगो अण्णदव्वेहि ॥ ३८ ॥
जीवो अणाइनिहणो तब्भावणभाविओ उ ससारे ।
खिप्प सो भाविज्जइ मेलणदोसाणुभावेण ॥ ३९ ॥
जो जारिसेण मित्ति करेइ अचिरेण तारिसो होइ ।
कुसुमेहि सह वसता तिला वि तग्गधिआ हुंति ॥ ४० ॥

---

सुष्ठुतर नाशयन्ति आत्मान ये चारित्रप्रभ्रष्टा ।
गुरुजनं वन्दयन्ते सुश्रमणं यथोक्तकारिण च ॥ ३४ ॥
अशुचिस्थाने पतिता चम्पकमाला न क्रियते शीर्षे ।
पार्श्वस्थादिस्थानेषु वर्तमानास्तथाऽपूज्या ॥ ३५ ॥
पक्वणकुले वसन् शकुनीपारगोऽपि गर्हितो भवति ।
इति गर्हिता सुविहिता म ये वसन्त कुशीलानाम् ॥ ३६ ॥
सुचिरमपि आसीनो वैडुर्य काचमणिकोन्मीश्र ।
न उपैति काचभावं प्राधान्यगुणेन निजकेन ॥ ३७ ॥
भावुका-ऽभावुकानि च लोके द्विविधानि भवन्ति द्रव्याणि ।
वैडुर्यस्तत्र मणिरभावुकोऽन्यद्रव्यै ॥ ३८ ॥
जीवोऽनादिनिधनस्तद्भावनाभावितस्तु ससारे ।
क्षिप्र स भाव्यते मेलनदोषानुभावेन ॥ ३९ ॥
यो यादृशेन मैत्री करोति अचिरेण तादृशो भवति ।
कुसुमै सह वसन्तास्तिला अपि तद्गन्धिता भवन्ति ॥ ४० ॥

अंबस्स य निंबस्स य दुण्हं पि समागयाइं मूलाइं ।
ससग्गी इ विणट्ठो अम्बो निंबत्तणं पत्तो ॥ ४१ ॥
सुचिर पि अच्छमाणो नलथभो उच्छुवाडमज्झम्मि ।
कीस न जायइ महुरो जइ ससग्गी पमाग ते ॥ ४२ ॥
ऊणगसयभागेणं बिंबाई परिणमंति तब्भावं ।
लवणागराईसु जहा वज्जिज्ज कुसीलससग्गि ॥ ४३ ॥
जह नाम महुरसलिल सागरसलिलं कमेण सपत्त ।
पावइ लोणीभाव मेलणदोसाणुभावेण ॥ ४४ ॥
एवं खु सीलवतो असीलवतेहिं मेलिओ सतो ।
पावइ गुणपरिहाणि मेलणदोसाणुभावेण ॥ ४५ ॥
खणमपि न खम काउं अणायजणसेवण सुविहिआण ।
हंदि ! समुद्दमुवगय उदय लवणत्तणमुवेइ ॥ ४६ ॥
सुविहिअ-दुव्विहिअं वा नाह जाणामि ह खु छउमत्थो ।
लिग तु पूअयाभि तिगरणसुद्धेण भावेण ॥ ४७ ॥

---

आम्रस्य च निम्बस्य च द्वयोरपि समागतानि मूलानि ।
संसर्गी विनष्ट आम्रो निम्बत्वं प्राप्त ॥ ४१ ॥
सुचिरमपि आसीनो नडस्तम्भ इक्षुवाटमध्ये ।
कस्मान्न जायते मधुरो यदि संसर्गी प्रमाणं ते ? ॥ ४२ ॥
ऊनकशतभागेन बिम्बादय परिणमन्ति तद्भावम् ।
लवणाकरादिषु यथा वर्जयेत् कुशीलससर्गम् ॥ ४३ ॥
यथा नाम मधुरसलिलं सागरसलिलं क्रमेण सप्रा तम् ।
प्राप्नोति लवणीभावं मेलनदोषानुभावेन ॥ ४४ ॥
एवं खलु शीलवानशीलवद्भिर्मेलित सन् ।
प्राप्नोति गुणपरिहानि मेलनदोषानुभावेन ॥ ४५ ॥
क्षणमपि न क्षमं कर्तुमज्ञातजनसेवनं सुविहितानाम् ।
हन्त ! समुद्रमुपगतमुदकं लवणत्वमुपैति ॥ ४६ ॥
सुविहित-दुर्विहितं वा नाहं जानामि अहं खलु छद्मस्थ ।
लिङ्गं तु पूजयामि त्रिकरणशुद्धेन भावेन ॥ ४७ ॥

जइ ते लिंग पमाणं वंदाहि निण्हए तुमं सव्वे ।
एए अवदमाणस्स लिंगमवि अप्पमाणं ते[1]॥ ४८ ॥
जइ लिंगमप्पमाणं न नज्जइ निच्छयेण को भावो ।
दट्ठूण समणलिगि[2] किं कायव्व तु समणेण ? ॥ ४९ ॥
अपुव्वं दट्ठूण अब्भुट्ठाण तु होइ कायव्व ।
साहुम्मि दिट्ठपुव्वे जहारिह जस्स ज जुग्ग ॥ ५० ॥
मुक्कधुरा सपागडमेवी चरण करणपब्भट्ठे ।
लिंगावससेमित्ते ज कीरइ त पुणो वुच्छ ॥ ५१ ॥
वायाइ नमुक्कारो हत्थस्सेहो अ सीसनमण च ।
सपुच्छणऽच्छण थोभवदण वदण वावि ॥ ५२ ॥
परिआय-परिस पुरिस खित्तं कालं च आगम नाउ ।
कारणजोए[3] जाए जहारिह जस्स ज जुग्ग ॥ ५३ ॥
परिआउ बभेयर[4] परिस विणीआ से[5] पुरिस णच्चा वा ।
कुलकज्जादाइत्ता आघवउ गुणागमसुअ वा ॥ ५४ ॥

---

यदि तव लिङ्ग प्रमाण वन्दस्व निन्हवान् त्व सर्वान् ।
एतानवन्दमानस्य लिङ्गमपि अप्रमाण तव ॥ ४८ ॥
यदि लिङ्गमप्रमाण न ज्ञायते निश्चयेन को भाव ।
दृष्ट्वा श्रमणलिङ्गिनं किं कर्तव्यं तु श्रमणेन ? ॥ ४९ ॥
अपूर्वं दृष्ट्वाऽभ्युत्थान तु भवति कर्तव्यम् ।
मावौ दृष्टपूर्वे यथार्ह यस्य यद् योग्यम ॥ ५० ॥
मुक्तधुर सप्रकटसेविन चरण करणप्रभ्रष्टान् ।
लिङ्गावशेषमात्रान् यत् क्रियते तत्पुनर्वक्ष्यामि ॥ ५१ ॥
वाचा नमस्कारो हस्तोच्छ्रयश्च शीर्षनमन च ।
सप्रच्छनाऽऽसने थोभवन्दन वन्दन वाऽपि ॥ ५२ ॥
पर्याय पर्षत्-पुरुषं क्षेत्र कालं चागम ज्ञात्वा ।
कारणयोगे जाते यथार्ह यस्य यद् योग्यम् ॥ ५३ ॥
पर्यायो ब्रह्मचर्यं पर्षद् विनीता तस्य पुरुषं ज्ञात्वा वा ।
कुलकार्याऽऽदायित्वाद् आख्यात गुणागमश्रुत वा ॥ ५४ ॥

---

१ क, तो । २ क, ग, ग । ३ क, ग, ज्जा । ४ क, ग, चेर । ५ क, ग, ञ्जि ।

खित्तम्मि संवसिज्जइ जस्स पभावेण निरुवसग्गं तु ।
उमम्मि अ परितप्पइ[1] साहूणं आगमण्णूण[2] ॥ ५५ ॥
एवविहस्स कुज्जा उप्पन्ने कारणप्पगारम्मि ।
कलिऊण जहाजुगं[3] वायाईणि[4] उ समग्गाणि ॥ ५६ ॥
एआइ अकुव्वतो जहारिहं अरिहदेसिअे मग्गे ।
न हवइ पवयणभत्ती अभत्तिमंतादओ दोसा ॥ ५७ ॥
तित्थयरगुणा पाडिमासु नत्थि निस्संसय विआणंतो ।
तित्थयरुत्ति नमंतो सो पावइ निज्जरं विउल ॥ ५८ ॥
लिंग जिणपण्णत्त एव नमंतस्स निज्जरा विउला ।
जइ वि गुणाविप्पहीण वदइ अज्जप्पसोहीए[5] ॥ ५९ ॥
संता तित्थयरगुणा तित्थयरे तेसिमं तु अज्झप्पं ।
न य सावज्जा किरिया इअरेसु धुवा समणुमन्ना ॥ ६० ॥
जह सावज्जा किरिया नत्थि ओ पाडिमासु एवमिअरा वि ।
तयभावे नत्थि फल अहाह[6] ओ अहेउअ होइ[7] ॥ ६१ ॥

---

क्षेत्रे समुष्यते यस्य प्रभावेन निरुपसर्गं तु ।
अवमे च परितप्यते साधूनामागमज्ञानाम् ॥ ५५ ॥
एवंविधस्य कुर्यादुत्पन्ने कारणप्रकारे ।
कलयित्वा यथायोग्य वाचादीनि तु समग्राणि ॥ ५६ ॥
एतान्यकुर्वन् यथार्हमर्हद्देशिते मार्गे ।
न भवति प्रवचनभक्तिरभक्तिमदादयो दोषा ॥ ५७ ॥
तीर्थंकरगुणा प्रतिमासु न सन्ति नि संशय विजानन् ।
तीर्थंकर इति नमन् स प्राप्नोति निर्जरां विपुलाम् ॥ ५८ ॥
लिङ्ग जिनप्रज्ञप्तमेव नमतो निर्जरा विपुला ।
यद्यपि गुणविप्रहीनं वन्दतेऽध्यात्मशुद्धये ॥ ५९ ॥
सन्तस्तीर्थंकरगुणास्तीर्थंकरे तेषामिदं तु अध्यात्म ।
न च सावद्या क्रिया इतरेषु ध्रुवा समनुमता ॥ ६० ॥
यथा सावद्या क्रिया नास्ति तु प्रतिमासु एवमितराऽपि ।
तदभावे नास्तिफल अथाह त्वहेतुकं भवति ॥ ६१ ॥

---

१ क, पडि । २ क, ग, य । ३ क, जोगं । ४ ग, णि समग्गाणि । ५ क, इर्थी । ६ ग, त्थ । ७ ग, अह होइ ।

कामं उभयाभावो तहवि फलमत्थि मणविसुद्धीए ।
तीए पुण मणविसुद्धीए कारणं हुंति पडिमाओ ॥ ६२ ॥
जइ वि अ पडिमाओ जहा मुणिगुणसंकप्पकारण लिंगं ।
उभयमवि अत्थि लिंगे न य पडिमासूभयं अत्थि ॥६३॥
नियमा जिणेसु अ गुणा पडिमा उद्दिस्स जे मणे कुणइ ।
अगुणे उ विआणंतो क नमओ मणे गुणं काउं ॥ ६४ ॥
जह वेलंबगलिंग जाणंतस्स नमओ हवइ दोसो ।
निद्धंधसं ति नाऊण वंदमाणे धुव दोसो ॥ ६५ ॥
रुप्पं टंकं विसमाहयक्खरं न वि य रूवओ छेओ ।
दुण्हं पि समाओगे रूवो छेअत्तणमुवेइ ॥ ६६ ॥
रुप्पं पत्तेअबुद्धा टंकं जे लिंगधारिणो समणा ।
दव्वस्स य भावस्स य छेओ समणो समाओगे ॥ ६७ ॥
जं[3] अन्नाणी कम्मं खवेइ० ॥ ६८ ॥
सुई जहा ससुत्ता० ॥ ६९ ॥

---

काममुभयाभावस्तथाऽपि फलमस्ति मनोविशुद्धया ।
तस्या पुनर्मनोविशुद्धया कारणं भवन्ति प्रतिमा[1] ॥ ६२ ॥
यद्यपि च प्रतिमा यथा मुनिगुणसंकल्पकारणं लिङ्गम्[2]।
उभयमपि अस्ति लिङ्गे न च प्रतिमासूभयमस्ति ॥ ६३ ॥
नियमाद् जिनेषु च गुणान् प्रतिमा उद्दिश्य यो मनसि करोति ।
अगुणास्तु विजानन् कं नमको मनसि गुणं कृत्वा ॥ ६४ ॥
यथा विडम्बकलिङ्गं जानतो नमतो भवति दोष ।
निद्धंधसमिति ज्ञात्वा वन्दमाने ध्रुवं दोष ॥ ६५ ॥
रौप्यं टङ्कं विषमाहताक्षरं नाऽपि च रूपकश्छेक- ।
द्वयोरपि समायोगे रूपकश्छेकत्वमुपैति ॥ ६६ ॥
रौप्यं प्रत्येकबुद्धा टङ्कं ये लिङ्गधारिणः श्रमणा ।
द्रव्यस्य च भावस्य च छेक श्रमण समायोगे ॥ ६७ ॥
यदज्ञानी कर्म क्षपयति० ॥ ६८ ॥
सुची यथा ससूत्रा० ॥ ६९ ॥

---

१ क, माओ जस्स । २ क, ग, हा । ३ क, ग, पुस्तके एतद्गाथाद्वयं नास्ति ।

*नाणं गिण्हइ, नाणं गुणेइ, नाणेण कुणइ किच्चाइं ।
भवसंसारसमुद्दं र्नाणी नाणेण उत्तरइ ॥ ७० ॥
कामं चरणं भावो तं पुण नाणसहिओ समाणेइ ।
न य नाणं तु अ भावो तेन रे नाणि पणिवयामो ॥ ७१ ॥
तम्हा न बज्झकरणं मज्झ पमाणं नयावि चारित्तं ।
नाण मज्झ पमाणं नाणे अ ठिअं जओ तित्थं ॥ ७२ ॥
नाऊण य सब्भावं अहिगमसम्मं पि होइ जीवस्स ।
जाईसरणनिसग्गुग्गया वि न निरागमा दिट्ठी ॥ ७३ ॥
नाणं सविसयनिययं न नाणमित्तेण कज्जनिप्फत्ती ।
मग्गन्नू दिट्ठन्तो होइ सचिट्ठो अचिट्ठो अ ॥ ७४ ॥
आउज्जनट्टकुसला वि नट्टिआ त जणं न तोसेइ ।
जोगं अजुंजमाणी निंदं खिसं च सा लहइ ॥ ७५ ॥
इय लिंगनाणसहिओ काइयजोगं न जुंजेई जो उ ।
न लहइ स मुक्खसुक्खं लहइ अ निंद सपक्खाओ ॥ ७६ ॥

---

ज्ञान गृह्णाति, ज्ञानं गुणयति ज्ञानेन करोति कार्याणि ।
भवसंसारसमुद्रं ज्ञानी ज्ञानेनोत्तरति ॥ ७० ॥
कामं चरणं भावस्तत् पुनर्ज्ञानसहितः समापयति ।
न च ज्ञानं स्वभावस्तेन ज्ञानिनं प्रणिपताम ॥ ७१ ॥
तस्मान्न बाह्यकरणं मम प्रमाणं नचापि चारित्रम् ।
ज्ञानं मम प्रमाणं ज्ञाने च स्थितं यतस्तीर्थम् ॥ ७२ ॥
ज्ञात्वा च सद्भावमधिगमसम्यक्त्वमपि भवति जीवस्य ।
जातिस्मरणनिसर्गोद्गताऽपि न निरागमा दृष्टि ॥ ७३ ॥
ज्ञानं स्वविषयनियतं न ज्ञानमात्रेण कार्यनिष्पत्ति ।
मार्गज्ञो दृष्टान्तो भवति सचेष्टोऽचेष्टश्च ॥ ७४ ॥
आतोद्यनाट्यकुशलाऽपि नर्तकी तं जनं न तोषयति ।
योगमयुञ्जाना निन्दा खिंसां च सा लभते ॥ ७५ ॥
इति लिङ्गज्ञानसहित कायिकयोगं न युङ्क्ते यस्तु ।
न लभते स मोक्षसौख्यं लभते च निन्दा स्वपक्षात् ॥ ७६ ॥

---

* क, ग, नास्तीयम् । १ क, ग, न । २ पादपूर्तावव्ययम् । ३ ग, ओ ।

जाणंतो वि[1] तरिउं काइयजोगं न जुंजइ नईए ।
सो वुब्भइ सोएण एव नाणी चरणहीणो ॥ ७७ ॥
गुणाहिए वदणश्च छउमत्थो गुणाऽगुणे अयाणतो ।
वंदिज्ज व गुणहीणं गुणाहिअ वा वि वंदावे ॥ ७८ ॥
आलएण विहारेण ठाणा चकमणेण य ।
सक्का सुविहिओ नाउ भासा-वेणइएण य ॥ ७९ ॥
आलएण विहारेणं ठाणा चकमणेण य ।
न सक्का सुविहिओ नाउं भासा-वेणइएण य ॥ ८० ॥
भरहो पसन्नचंदो सब्भितर-बाहिर उदाहरण ।
दोसुप्पत्तिगुणकरं न तेसि बज्झं भवे करण ॥ ८१ ॥
पत्तेअबुद्धकरणे चरणं नासति जिणवरिंदाण ।
आहच्च भावकहेणे[2] पचहिं ठाणेहिं पासत्था ॥ ८२ ॥
उम्मग्गदेसणाए चरण नासति जिणवरिंदाण ।
वावन्नदंसणा खलु न हु लब्भा तारिसा दट्ठु ॥ ८३ ॥

---

जानन्नपि तरीतुं कायिकयोगं न युङ्क्ते नद्याम् ।
स उह्यते श्रोतसा एवं ज्ञानी चरणहीन ॥ ७७ ॥
गुणाधिके वन्दनकं छद्मस्थो गुणाऽगुणानजानन् ।
वन्देत वा गुणहीनं गुणाधिकं वाऽपि वन्दयेत् ॥ ७८ ॥
आलयेन विहारेण स्थानाच्चङ्क्रमणेन च ।
शक्य सुविहितो ज्ञातुं भाषा-वैनयिकेन च ॥ ७९ ॥
आलयेन विहारेण स्थानाच्चङ्क्रमणेन च ।
न शक्य सुविहितो ज्ञातु भाषा-वैनयिकेन च ॥ ८० ॥
भरत प्रसन्नचन्द्र साभ्यन्तरबाह्यमुदाहरणम् ।
दोषोत्पत्ति-गुणकरं न तेषा बाह्यं भवेत् करणम् ॥ ८१ ॥
प्रत्येकबुद्धकरणे चरणं नाशयन्ति जिनवरेन्द्राणाम् ।
आहत्य भावकथने पञ्चभि· स्थानै पार्श्वस्था ॥ ८२ ॥
उन्मार्गदेशनाया चरणं नाशयन्ति जिनवरेन्द्राणाम् ।
व्यापन्नदर्शना खलु न खलु लभ्यास्तादृशा द्रष्टुम् ॥ ८३ ॥

---

१ क, ग, वि·य । २ ग, हे ।

जह नाणेणं न विणा चरण नादंसणिस्स इय नाणं ।
न य दसण न भावो तेन र दिट्ठिं पणिवयामो ॥ ८४ ॥
जुगवं पि समुप्पन्नं सम्मत्तं अहिगमं विसोहेइ ।
जह कयगमंजणाई जल-दिट्ठीओ विसोहिंति ॥ ८५ ॥
जह जह सुज्झइ सलिलं तह तह रूवाइ पासइ दट्ठा ।
इअ जह जह तत्तरुई तह तह तत्तागमो होइ ॥ ८६ ॥
कारण-कज्जविभागो दीव-पगासाण जुगव जम्मेऽवि ।
जुगवुप्पन्नं पि तहा हेऊ नाणस्स सम्मत्तं ॥ ८७ ॥
नाणस्स जइ वि हेऊ सविसयनिअय तहावि सम्मत्तं ।
तम्हा फलसंपत्ती न जुज्जइ नाणपक्खिव्व ॥ ८८ ॥
जह तिक्खरुई वि नरो गंतुं देसंतर नयविहूणो[3] ।
पावेइ न तं देसं नयजुत्तो चेव पाउणइ ॥ ८९ ॥
इअ नाण-चरणरहिओ सम्मदिट्ठी वि मुक्खदेसं तु ।
पाउणइ नेव, नाणाइसंजुओ चेव पाउणइ ॥ ९० ॥

---

यथा ज्ञानेन न विना चरणं नाऽदर्शनिन इति ज्ञानम् ।
न च दर्शनं न भावस्तेन दृष्टिं प्रणिपताम ॥ ८४ ॥
युगपदपि समुत्पन्नं सम्यक्त्वमधिगमं विशोधयति ।
यथा कतकाऽञ्जनादयो जल दृष्टी विशोधयन्ति ॥ ८५ ॥
यथा यथा शुध्यति सलिलं तथा तथा रूपाणि पश्यति द्रष्टा ।
इति यथा यथा तत्त्वरुचिस्तथा तथा तत्त्वागमो भवति ॥ ८६ ॥
कारण कार्यविभागो दीप प्रकाशयोर्युगपद् जन्मन्यपि ।
युगपदुत्पन्नमपि तथा हेतुर्ज्ञानस्य सम्यक्त्वम् ॥ ८७ ॥
ज्ञानस्य यद्यपि हेतु स्वविषयनियतं तथाऽपि सम्यक्त्वम् ।
तस्मात् फलसंप्राप्तिर्न युज्यते ज्ञानपक्ष इव ॥ ८८ ॥
यथा तीक्ष्णरुचिरपि नरो गन्तुं देशान्तरं नयविहीन ।
प्राप्नोति न तं देशं नययुक्तश्चैव प्राप्नोति ॥ ८९ ॥
इति ज्ञान-चरणरहित सम्यग्दृष्टिरपि मोक्षदेशं तु ।
प्राप्नोति नैव, ज्ञानादिसंयुतश्चैव प्राप्नोति ॥ ९० ॥

---

१ क, ण । २ ग, जम्मे वि । ३ ग, णं । ४ क, पायाओ ।

धम्मनिउत्तमइआ परलोगपरंमुहा विसयगिद्धा।
चरणकरणे असत्ता सेणियरायं ववइसंति ॥ ९१ ॥
न सेणिओ आसि तया बहुस्सुओ न या वि पन्नत्तिधरो न वायगो।
सो आगमिस्साइ जिणो होविस्सइ समिक्ख पन्नाइ वर खु दंसण ॥९२॥
भट्टेण चरित्ताओ सुट्ठुअर दसण गहेअव्व।
सिज्झंति चरणरहिआ दंसणरहिआ न सिज्झंति ॥ ९३ ॥
दसारसीहस्स य सेणिअस्स पेढालपुत्तस्स य सच्चइस्स।
अणुतरा दसणसंपया तया विणा चरित्तेणऽहर गइ गया ॥ ९४ ॥
सव्वाओ वि गईओ अविरहिआ नाण-दसणधरेहिं।
ता मा कासि पमाय नाणेण चरित्तरहिअेण ॥ ९५ ॥
सम्मत्तं अचरित्तस्स हुज्ज भयणाओ निअमसो नत्थि।
जो पुण चरित्तजुत्तो तस्स उ नियमेण सम्मत्तं ॥ ९६ ॥
जिणवयणबाहिरा भावणाहिं उव्वट्टण अजाणता।
नेरइअ-तिरिय-एगिंदियेहिं जइ सिज्झइ जीवो ॥ ९७ ॥

---

धर्मनिवृत्तमतिका परलोकपराङ्मुखा विषयगृद्धा।
चरण-करणेऽशक्ता श्रेणिकराज व्यपदिशन्ति ॥ ९१ ॥
न श्रेणिक आसीत्तदा बहुश्रुतो नचाऽपि प्रज्ञप्तिधरो न वाचक।
स आगमिष्यन्त्या जिनो भविष्यति समीक्ष्य प्रज्ञया वरं खलु दर्शनम् ॥९२॥
भ्रष्टेन चारित्रात् सुष्ठुतरं दर्शनं ग्रहीतव्यम्।
सिध्यन्ति चरणरहिता दर्शनरहिता न सिध्यन्ति ॥ ९३ ॥
दशार्हसिंहस्य च श्रेणिकस्य पेढालपुत्रस्य च सत्यके।
अनुत्तरा दर्शनसपत् तदा विना चारित्रेणाऽधरा गति गता ॥ ९४ ॥
सर्वा अपि गतयोऽविरहिता ज्ञान-दर्शनधरै।
तस्मान् मा कार्षीं प्रमादं ज्ञानेन चारित्ररहितेन ॥ ९५ ॥
सम्यक्त्वमचारित्रस्य भवेद् भजनातो नियमशो नास्ति।
य पुनश्चारित्रयुक्तस्तस्य तु नियमेन सम्यक्त्वम् ॥ ९६ ॥
जिनवचनबाह्या भावनाभ्यामुद्वर्तनामजानाना।
नैरयिक-तिर्यगे-केन्द्रियेभ्यो यथा सिध्यति जीव ॥ ९७ ॥

---

१ क, ग, य। २ क, ग, भ। ३ ग, पेढाल्लपुत्तस्स। ४ क, ग, सव्वयस्स।

अर्हम् ।

# अथ तृतीयः सर्गः ।

कौ बेरंदिग्भागमपास्यमा गमागस्त्यमुष्णांशुरिवाऽवतीर्णः ।
अपेतयुद्धाऽभिनिवेशसौम्यो हरिर्हरिप्रस्थमथ प्रतस्थे ॥ १ ॥
जगत्पवित्रैरपि तन्नपादैः स्प्रष्टुं जगत्पूज्यमयुज्यताऽऽर्कैः

---

१ उश्च अश्च आ च वा, ताभ्या युक्ता इश्च लश्च दश्च इलदाः ते सन्त्यमिन् इति वेलदी, स चासौ ग् गकारः, तेन भाति ईदृशो अः अकारः, त गच्छति प्राप्नोति तद् ब–वयोः, स्लयोश्च सादृश्याद् वेलदिग्भागम्–इलादुगमित्यर्थः, अथवा बेर शरीरम्, तस्य दिग्-भागो दिग्देशो जन्मभूमिः, तत्र भान्ति ईदृशा अगाः पर्वताः, तरवो वा यत्र त बेरदिग्भाग हरिप्रस्थम् । २ अम्–अर्हन्त सिद्ध पाति अपः, स एव आस्यमा मुखचन्द्रो यस्य असौ अपास्यमाः,–सर्वदैव स्वमुखे अर्हन्नामरक्षकः । ३ तदेव इलादुगम्, रं रकार गच्छति गम्–इलादुर्ग-नाम्ना प्रतीतम् । ४ आगः अपराधः–अन्याय, त त्यजति इति 'ड' प्रत्यये आगस्त्यः, तम्–आगस्त्यम्–हरिप्रस्थम् । ५ अश्च पा च अपौ, तयोः ईर्लक्ष्मीर्यस्य ईदृक् त् तकारः, तेन यौति मिश्रीभवति अपेतयुत् । ६ धो धनदः, तद्वद् अभीः–निर्भयो नीः–नायको यत्र तम्–इलादुर्ग पर्वततटम् । ७ वा–अथवा । ८ ईशश्चासौ सौम्यश्च ईशसौम्यः । ९ हरिर्मुनीन्द्रः । १० स एव सूरिः, नपादः पूज्यपादो येषा तैर्जगत्पवित्रै मुनिभिः । ११ कर्मकर्तरि । १२ अरीणा समूह आरम्, तत् करोति, इतिं णौ, क्विपि, स्वार्थिके अप्रत्यये आर्कः विपक्षसंघातः ।

यतो बृहत्पार्वणचन्द्रचारु तस्यातपत्रं बिभरांबभूवे ॥ २ ॥

मृणाऽलसूत्रामलमन्तरेणस्थितश्चलच्चामरयोर्द्वयं सः ।
भेजेऽभितः पा तु कसिद्धसिन्धोरभूतपूर्वां श्रियमम्बुराशेः ॥ ३ ॥

चित्राभिरस्योपरि मौलिभाजां भाभिर्मणीनामनणीयसीभिः ।
नीराजनेवाऽजनि सज्जनौघैर्विनिर्मिते कर्मणि पूजनायाः ॥ ४ ॥

पदे पदे नम्रनृपावतंसप्रत्युप्तगारुत्मतरत्नभासा ।
भर्तुर्विहर्तुश्चरणाम्बुयोनेर्यवाङ्कुरश्रीरनुनीयते स्म ॥ ५ ॥

गुरुश्चलंश्चारुचरित्रपात्रैः परीवृतो नीवृदुपासकैश्च ।
बंहीयसा दीप्तिवितानकेन जिगाय गङ्गाऽर्कसुताप्रसङ्गम् ॥ ६ ॥

कृपालतामङ्कुरयन् मनोऽन्तश्चचाल तेषामपि भूभुजां सः ।
यैर्वह्निरूपं विदधेऽगभाजां विक्षोभजाऽसृक्स्नपितैरिवाऽसौ[१४] ॥ ७ ॥

---

१ मुनिकुलविशेषणम्, बृहन्ति पार्वणानि पर्वभवानि धर्मकार्याणि येषां ते बृहत्पार्वणाः, ते च ते चन्द्राश्चन्द्रशाखिनश्च बृहत्पार्वणचन्द्रा मुनयः, तैरम्यम्, २ यद्वा तपाभावोऽतपम्, सतस्त्रस्यन्ति अतपत्राः, तेषां समूह आतपत्रं मुनिकुलम्। यतस्त सूरिम्, स्प्रष्टुं वन्दितुम्, आर्कः विपक्षगणोऽयुज्यत स्वयमेव, अत एव जगत्पवित्रैरपि मुनिभिस्तस्य मुनिकुल सभृतमभूत्, इति तत्त्वम् । ३ मृणा हिंसा। ४ आम प्राप। ५ लम्-लोपनम्-नाशम्। ६ एणस्थः शान्तिजिनः, चन्द्रो वा स जातोऽस्मिन् असौ एणस्थितः। ७ आम प्राप । ८ रयोर्लक्ष्म्योर्द्वय द्वितयम्। ९ भ भयम्, न भयमभयम्, तदस्ति अस्मिन् असौ अभितः। १० पा स्वामी। ११ कानामात्मनां सिद्धः सिन्धुः ससार रूपो यस्मात्, तस्य कसिद्धसिन्धोः। १२ अभूतपूर्वाम्-अकारपूर्वाम्-अश्रियमित्यर्थः। १३ अम्बुराशेः सागरपक्षस्य पा स्वामी। १४ करवाले।

उभौ यदि व्योम्नि पृथक्प्रवाहावमर्त्यसिन्धोर्मिलितौ भवेताम् ।
तेनोपमीयेत विभोः प्रवेशे सार्थानुगाभ्युद्गतसंघयोगः ॥ ८ ॥

पुरः प्रवेशे दिवसस्य साक्षाद् दध्रे मणिर्दीधितिदीपिताशः ।
माङ्गल्यमुक्तास्रजि नायकत्वं मूर्ध्नि ध्वजस्यार्जुनकुम्भशोभाम् ॥ ९ ॥

मुक्तामयं पादयुगे नतानां भाति स्म दामाप्रपदीनमस्य ।
अङ्गुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चैः प्रेम्णा पयस्तत्परिपावनाय ॥ १० ॥

पुरन्दरेणाऽपि पुरः क्षमीन्दोः कल्याणनाम्नाऽभिगमाय चक्रे ।
गजव्रजो राजिकुथैः पयोजैर्यमस्वसुश्चित्र इवोदवाहः ॥ ११ ॥

प्रसाधितस्याथ मधुद्विषोऽभूल् लक्ष्मीः सदृक्षा करिणां कुलस्य ।
वियत्प्रयुक्तक्रमपुष्कर¹स्य वराहदेहेन महीं दिधीर्षोः ॥ १२ ॥

अनन्तनागा²भरणस्य चाग्रस्थलस्थितश्रीललन³स्य तस्य ।
न पार्वती श्रीर्बिभिदे भवार्धविष्णोरिवागात् करिणां व्रजस्य ॥ १३ ॥

प्रवृत्तिसिन्धोः पुलिने ललन्त्या भृङ्गावलेस्ताण्डवमण्डपौ वे⁴ ।
प्रकाशकार्कश्यगुणौ दधानाः कुम्भाविभाश्चेलुरभि क्षमीन्द्रम् ॥१४॥

ते नागजाऽभ्यक्तवराङ्गभागा नागा विरेजुश्चलिता इवाऽगाः ।
येषां गतेर्नागपतिः शुचेऽभून्नितान्तमाक्रान्त इवाङ्गनानाम् ॥ १५ ॥

यां यां प्रियः प्रैक्षत कातराक्षीं तत्कुम्भदृश्वा स्तनसाम्यशंसी ।
सा सा ह्रिया नम्रमुखी स्वमुक्तास्रजो मणिं⁵ दर्शयति स्म तस्मै ॥ १६ ॥

---

१ पुष्कर चरणकमलम्, शुण्डाग्रं च । २ कृष्णपक्षेऽनन्तनागः शेषनागः, हरपक्षे बहुसर्पभूषणस्य, नागाः करिणोऽपि । ३ ललना हस्तिनी, स्त्री च । ४ उपमायाम् । ५ स्तनशोभापराभूतौ कुम्भौ इम स्वं मुक्तास्रग्मणिं मम दण्डत्वेन ददतुरिति दर्शयति ।

तस्यातसीसूनसमानभासो गर्जत्पयोदेन समस्य मूर्त्या ।
न हास्तिकस्योज्ज्वलकिङ्किणीभिर्बलाहकश्रेणिरुचिर्न चक्रे ॥ १७ ॥
कुम्भस्थलस्थापितरौप्यकुम्भभ्राम्यन्मयूखावलिमण्डलेन ।
गौराङ्गगर्वाद् गजयूथनाथा मदेन शक्रद्विपमन्वकार्षुः ॥ १८ ॥
आधोरणैः स्वाङ्गविभूषणान्तः संक्रान्तकान्ताचलदृक्सहस्रैः ।
नित्यं हरेः संनिहिता निकामं सहस्रनेत्री व्यभिचार्यते स्म ॥ १९ ॥
प्रफुल्लसप्तच्छदसंधिगन्धिरनन्यमाधोरणतां दधानः ।
चकार लाजोत्किरणं किमुच्चैर्गजव्रजः पुष्करसीकरेण ॥ २० ॥
स्पृशंश्च स स्वावयवैर्धरित्रीं व्यूहो द्विपानां धरणीधवस्य ।
राज्यश्रियो भद्र इति प्रतीतेर्नाम्नाऽपि तस्यैव स नन्दकोऽभूत् ॥ २१ ॥
न नीतमन्येन नतिं कदाचिद् धराधवः सादिबलं बलीयः ।
बलाङ्गकोत्फुल्लवनाश्रि सार्धमादाय सूरीन्दुमभिप्रतस्थे ॥ २२ ॥
बिभर्ति यामैन्दवबिम्बभासाऽकृष्णार्णवाभ्यर्णचरैकहंसः ।
स सूरिराट् तामुदुवाह शोभामभ्यापतत्सादिबलान्तिकस्थः ॥ २३ ॥
विवन्दिषुः सूरिपदारविन्दं महीधवः सैन्धवमारुरोह ।
महारथः पुष्यरथं रथाङ्गी साक्षादिवोक्षाणमिव त्रिनेत्रः ॥ २४ ॥
नृपेऽधिरूढे क्रमतः प्लुतानि चकार धाराचतुरस्तुरंगः ।
सव्याक्षिदृष्टो हरिणा विहायस्तलं विविक्षन्निव पन्नगारिः ॥ २५ ॥
यियासतस्तस्य महीध्ररन्ध्रभिदां पटीयान् पटहप्रणादः ।
गन्धर्वराजामधिमण्डलाङ्कं प्रोत्साहयामास नटप्रवृत्तिम् ॥ २६ ॥
अजन्यमजर्यं नृपवाजिराजां धत्रीं धरित्र्याः फणिना ततोऽधः ।
तत्क्लान्तिमेते चलपुच्छव्रातैरुत्क्षिप्य पांशुं शमयांबभूवुः ॥ २७ ॥

---

१ पूर्वं राजा करिणमारूढः, पश्चाद्–दृष्टे च गुरौ अश्वमधिरुरोह, इति तद्विनीतता सूचनम् । २ अश्वरत्नानाम् । ३ अजर्यं सख्यम् ।

गजैः सवीतैस्तुरगैर्विनीतैर्युतानि संसक्तभटाऽयुतानि ।
क्रियाफलानीव सुनीतिभाजं बलानि भूनायकमन्वयुस्तम् ॥ २८ ॥

जनैरहंपूर्विकया प्रणुन्नधुरीणभावात् पतिते सुवर्णे ।
पिष्टेऽरिणा रेणुकणाः सुवर्णक्षोदद्युतश्चुक्षुदिरे रथौघैः ॥ २९ ॥

न लङ्घयामास महाजनानां शिरांसि रेणुः करिणां मदार्द्रैः ।
यतीशितुः किं तु पदप्रसादाद् धरातलस्योद्धुषणं शशंस ॥ ३० ॥

नतत्रिकोत्साहरसेन वाहा मुहुर्यदुच्चिक्षिपुरग्रपादौ ।
विरेजुरुच्चैःश्रवसं तदुच्चैर्विजेतुकामा इव संमुखीने ॥ ३१ ॥

क्रमात् पुरा निर्मितसख्यसौख्यान् सह प्रवृद्धान् भुवनप्रसिद्धान् ।
प्रक्रीडितान् रेणुभिरेत्य तूर्णं ननाम सूरीनवनीदिनेशः ॥३२॥

चतुर्विधः संघजनोऽप्यनंसीदपूर्ववत्तानपि दृष्टपूर्वान् ।
अनेकशः संस्तुतमप्यनल्पा नवं नवं प्रीतिरहो ! करोति ॥ ३३ ॥

उपेयुषो वर्त्म निरन्तराभिरस्तोकलोकस्य नतिक्रियाभिः ।
प्रतीक्ष्यमाणोऽथ गुरुः सुधर्मलाभाशिषा पूर्जनमभ्यनन्दत् ॥ ३४॥

परिष्कृतत्वेन दिशः पिशङ्गीर्या कुर्वती काञ्चनभूमिभासा ।
दिनोदयस्य श्रियमाश्रितानां यतीश्वराणां पुरतः शशंस ॥३५॥

प्रविश्य तस्यां पुरि पौरनन्दी गणाग्रणीस्तां वसतिं पुपाव ।
अनिर्विदा या विदधे विधात्रा भुवो विभूषेव भुविर्जयाय ॥ ३६ ॥

पुरी सनाथा प्रभुणा जनानां गतागतैर्वृद्धिमतीव चक्रे ।
सनेमिनीं द्वारवतीं सखीं तां छायेव या स्वर्जलधेर्जलेषु ॥ ३७॥

रथाङ्गभर्त्रेऽभिनवं वराय हरिर्यथा द्वारवतीं ससर्ज ।
तथैव मन्ये गुरवे ध्रुवेण विनिर्मिता नर्मवती पुरीयम् ॥ ३८ ॥

---

१ यातमङ्कुशवारणम्, निषादिनां पादकर्म यतम्, वीत तु तद्द्वयम् ।

२ उद्धुषणं रोमोद्गमः ।

पयोधिना तुङ्गतरङ्गरङ्गच्छटोच्छलच्छङ्खकुलाकुलेन ।
पुरी दधौ साम्यमहो ! महौघे तदाऽभिनृत्यत्तुरगीप्रवृत्त्या ॥ ३९ ॥
निनंसया संगतपौरनारीस्नानैस्तडागोऽत्र तदा तरङ्गैः ।
लोलैरलोलद्युतिभाञ्जि मुष्णन् रत्नानि रत्नाकरतां जगाहे ॥ ४० ॥
हल्लीसकैः प्राप्तपरिश्रमाणामुपेयुषीणां पुलिनेऽङ्गनानाम् ।
सरोऽविलम्बादिव मानमत्र विस्तारयामास तरङ्गहस्तैः ॥ ४१ ॥
यत्सालमुत्तुङ्गतया विजेतुं शशाक न स्वःप्रभुवैजयन्तः ।
तत्र न्यवात्सीन् नरनाथमन्त्री वणिक्षु सभ्यः सहजूमहेभ्यः ॥ ४२ ॥
चतुःसमामर्दविसन्धगन्धः प्राकारभित्त्या सहसा निषिद्धः ।
निर्गत्य यत् सौधगवाक्षमार्गे प्रादुर्विचक्रे चरितं गृहस्य ॥ ४३ ॥
अथाऽन्यदासौ गुरुमाह मन्ये त्वदुद्भवादेव शिवाय दैवैः ।
आराधितोऽद्धा मनुरप्सरोभिः प्रसादितोऽसूत कुलाग्रिमं ते ॥४४॥
त्वत्पूर्वजाः केचिदिहैव पूर्वं जातास्त्रिवर्गाचरणैः सुराच्याः ।
यद्योषितः स्फाटिकसौधमूर्ध्नि नभोगता देव्य इव व्यराजन् ॥४५॥
कान्तेन्दुकान्तोपलकुट्टिमेषु त्वत्पूर्वजानामिह मन्दिरेषु ।
छाया विरेजुर्विलसद्वधूनां शरीरभाजः कमला इवैषाम् ॥ ४६ ॥
तवागमादेव ततो विशेषाद् जालागताभ्योऽधिगृहं गृहिण्यः ।
इहोच्छलद्भूरिसुमावलीभ्यः प्रकाशमभ्यस्य दृशोर्विशन्ति ॥ ४७ ॥
त्वद्दृष्टिसंभावनयाऽऽश्रयालीं पियूषयूषात्मतयेव शुभ्राम् ।
चक्रुर्युवानः प्रतिबिम्बिताङ्गाः स्ववेषवर्णैर्विविधामिहाद्य ॥ ४८ ॥
अथाऽत्र शिष्ये स्वपदप्रतिष्ठां प्रणीय नः प्रीणय चित्तनिष्ठाम् ।
महः क्रियान्मेऽस्य गृहे स्वबिम्बैः सजीवचित्रा इव रत्नभित्तीः ॥४९॥

---

१ चतुर्भिः कर्पूरा-ऽगरु-कक्कोल-कुङ्कुमैः सम चतुःसमम् । २ नौ-नार्थमेतत् । ३ निश्चितम् ।

गुरोर्गिरः श्रुत्युदितप्रसत्तेस्तदा स्मिताऽपाण्डुकपोलकाभ्याम् ।
बिम्बे सवर्णेऽपि सुवर्णलिप्तस्तम्भेषु भेजे नवदर्पणश्रीः ॥ ५० ॥
शुकाञ्जनीलोत्पलनिर्मितानां स्रजां विलेषुः प्रतिसद्म राज्यः ।
कटाक्षमाला इव पर्वलक्ष्म्यास्तथेति साधुप्रभुणाऽभ्युपेते ॥ ५१ ॥
मणीमयेष्वङ्गणकेषु धाम्नां लिप्तेषु भासा गृहदेहलीनाम् ।
अन्तःस्थिताऽपीन्दुमुखी तदासीदभ्यागतेवाऽर्थिजनाय दातुम् ॥५२॥
तत्रोत्सवस्य श्रवणामृतेन नाऽभूत् पुरी सा श्रवणेन तृप्ता ।
यस्यामलिन्देषु न चक्रुरेव लोकाः स्वधाम्नां प्रतिकर्मनर्म ॥ ५३ ॥
अस्याः स्वसेवाऽस्ति पुरी द्वितीया पार्श्वेऽद्वितीया खलु सावलीति ।
न वेद यस्यां मणिकुट्टिमत्वाद् मुग्धाङ्गना गोमयगोमुखानि ॥ ५४ ॥
गोपानसीषु क्षणमास्थितानां दिदृक्षयाऽभ्येत्य दिवो वधूनाम् ।
जालेषु लीलालसमानुषीणां सुखेन संख्यं समुदेत्यमुष्याम् ॥५५॥
नृत्यप्रलोभाद् वलभीस्थितानामालम्बिभिश्चन्द्रकिणां कलापैः ।
जातातपत्रप्रभया प्रभुत्वं या व्यञ्जयामास पुरी पुरीणाम् ॥ ५६ ॥
स्फुरत्करैरप्यकरैर्विलासव्यासक्तरामैरपि चाऽविरामैः ।
रेजे विचित्रैरपि या सचित्रैर्गृहैर्विहारैरपि हारिहारैः ॥ ५७ ॥
अथैत्य तस्यां पुरि सूरिमन्त्रादिध्यासयाऽधत्त स धारणां ताम् ।
अन्तर्निलीनेन्द्रियवृत्तिमेनं यस्यां जनः कृत्रिममेव मेने ॥ ५८ ॥
क्षितिप्रतिष्ठोऽपि मुखारविन्दैर्धितद्युतोष्णांशुरिवाऽप्रधृष्यः ।
ज्वलत्तपोज्योतिरसौ समाधिं दधद् जिगाय द्युसदीशतेजः ॥५९॥
तदेयुषीर्देववधूर्विलासै रागं विविक्ता इति वर्धयन्तीः ।
योगाद् गुरुं क्षोभयितुं न दक्षा बभाषिरे धीरकटाक्षलक्षाः ॥६०॥
रम्भाः स्मरं भावयितुं मनोऽन्तर्मधुं व्यधुस्तेन मणीचकानाम् ।
मधूनि वक्त्राणि च कामिनीनामन्योन्यमामोदविवादमीयुः ॥६१॥
प्रियैः प्रियैर्यैर्वचसां विलासैः स्त्रियः प्रसन्ना विहिता रतान्तः ।
सख्याः शुकस्तान्निवदंस्तदान्तेवासित्वमाप स्फुटमङ्गनानाम् ॥६२॥

छन्नेष्वपि स्पष्टतरेषु यत्र पिकानुवादान् भणितेषु सख्यः ।
प्रत्यायिताः संगमरङ्गसौख्यं भेजुः स्वयंजातफलाः कलानाम् ॥६३॥
वासांसि लज्जावधये धृतानि स्वच्छानि नारीकुचमण्डलेषु ।
केरम्पयोगस्य भियेव नूनं नाऽविन्नयंस्तत्प्रियदृष्टिपातान् ॥ ६४ ॥
लताभिलच्छालिषु तत्प्रवृत्तिर्ह्रीरक्षणायेव वधूधृतानि ।
आकाशसाम्यं दधुरम्बराणि रतश्रमाम्भःपृषदार्द्रितानि ॥ ६५ ॥
अविक्रिय चेति मधुक्रियाभिस्तमीक्ष्य रम्भाः प्रणिधानशुद्धम् ।
स्वविभ्रमं विभ्रममेव जज्ञुर्न नामतः केवलमर्थतोऽपि ॥ ६६ ॥
यस्यामजिह्मा महतीमपङ्कां भक्तिं वितेनुर्गणधारिणोऽपि ।
सूरेः क्रमात् शासनदेवताऽऽविर्बभूव सा भक्तिवशात् सहर्षा ॥६७॥
भवादृशा ध्यानधिया स्वयोगसीमानमत्यायतयोऽत्यजन्तः ।
स्मरन्ति मे श्रीप्रभवस्ततोऽहं धन्येति साऽऽभाष्य गुरूननंसीत् ॥६८॥
यदर्थमुग्रतपसा त्वयाऽहं स्मृता तदाज्ञापय देव ! सद्यः ।
जनैरजातस्खलनैर्न जातु भवादृशैर्ध्येयमिहार्थवन्ध्यम् ॥ ६९ ॥
को यौवराज्यश्रियमर्हतीति श्रुत्वा गुरोर्वाचमुवाच देवी ।
समेऽपि शिष्या उचिता हि यैर्न द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥७०॥
परस्परस्पर्धिपरार्ध्यरूपा जितेन्द्रिया ज्ञप्तिगुरुस्वरूपाः ।
शिष्यास्तवैतेषु गुणैः प्रधानः श्रीपाठकोऽसौ कनकाभिधानः ॥७१॥
कलाः कलाः सर्वकलाङ्गनासु पौरस्त्रियो यत्र निधाय वेधाः
स्वकोशमध्यादिव तत् ततस्ना यथार्हमादाय जगत्सु युङ्क्ते ॥ ७२ ॥
स्थानेऽस्य दीक्षैव यदेतदर्हा कन्यां विधातु विदुषो न वेधाः ।
श्रीनिर्मितिः प्राप्तघुणक्षतैकवर्णस्वरूपाऽस्य जरत्तरस्य ॥ ७३ ॥

---

१ रतप्रवृत्तौ शतधा बभूवुः क चोन्नतानां तनुभिर्निरोध । इत्यपि । २ नागर्यो वनिताः । ३ ग्रामीणवनिताः । ४ अकारान्तोऽयं पण्डितपर्यायः ।

जस्य, अस्य मुनीन्दोर्गुरोः, अंह्री पादौ, स्प्रष्टुमिह मध्ये प्रविशतः नगरान्तरागच्छतः, मम एष दुरन्तोऽपारः, अन्तराभूर्विघ्नो भवतीति हेतोर्जलधिर्यत्र वप्रं निन्दतीति ॥ ८० ॥

कैलासौकोदिशमिव रुचामीश्वरस्यागतस्य
 स्वाहाजानेरिव पवनजप्राज्यसाहाय्यभाजः ।
द्रङ्गं तीर्थं तमधिवसतः श्रीतपागच्छराजः
 स्फातिं स्फूर्जत्सवितृसवयाः प्राप पृथ्वीं प्रतापः॥८१॥

यथा रुचामीश्वरस्य सूर्यस्य, कैलासौकोदिशं कौबेरीं दिशमागतस्य, पुनः, यथा स्वाहाजानेः कृशानोः, किं०, पवनजप्राज्यसाहाय्यभाजः समीरसंबन्धिसाहाय्यशालिनः, तथा तं तीर्थं द्रङ्गं श्रीस्तम्भतीर्थनगरं, अधिवसतः सतः श्रीतपागच्छराजः श्रीविजयसेनसूरेः, प्रतापः, किं०, सवितृसवयाः सूर्यमित्रं, तत्तुल्यत्वात्, पृथ्वीं विशालां, स्फातिं वृद्धिं, प्राप ॥८१॥

क्लेशः पत्रप्रसूनाप्रथिमभव इव स्फीतशीतस्य चाऽसं-
 ल्लीलोल्लासे धरायामभिसरति जवाद् याम्यदिग्गन्धवाहे।
नासीन्नीर्दुःस्थताया व्यसनशतसृजो नापि मिथ्यात्विराजः
श्रीतीर्थे स्तम्भतीर्थे लसति साति सहोभाजि नव्यार्षिराजि८२

यथा धरायां भूमौ, याम्यदिग्गन्धवाहे दाक्षिणात्ये वाते, अभिसरति आगच्छति सति, किंलक्षणे, लीलायाः केलेरर्थाद् वसन्तक्रीडाया उल्लासो यस्मिंस्तस्मिन् दक्षिणानिले सति, पत्रप्रसूनानां पृथोर्भावः प्रथिमा न प्रथिमाऽप्रथिमाऽभावः पत्रप्रसूनानामप्रथिमभवः पत्रप्रसूनाप्रथिमभवः कोऽर्थः—पत्रप्रसूनाऽभावभवः क्लेशो यथा न स्यात्, च पुनः, यथा स्फीतशीतस्य क्ले-

शो न स्यात्, किं०, असन् अश्रेष्ठः, वसन्तागमे हि पत्राणां प्रसूनानां चोद्गमः शीतव्यपगमश्च स्यातां, तेन तयोरुपद्रवो न स्यात्, तथा स्तम्भतीर्थे, किं०, श्रीणां तीर्थे क्षेत्रे, अथवा श्रीमत् तीर्थं संघो वाऽर्हच्चैत्यादि यत्र तत्र, नव्यर्षिराजि नवीनाचार्यराजे लसति सति, किं०, सहोभाजि बलवति ज्ञानादिबलशालिनि, दुःस्थताया दारिद्र्यस्य, भीर्नासीत् परद्वीपान्तरात् प्रवहणानां क्षेमेणाऽऽगमात्, पुनः, व्यसनशतसृजः कष्टशतकर्तुः, मिथ्यात्विराजः पूर्वोक्तकल्याणराजनाम्नोऽपि, भीर्भयं नासीत् । अत्र सर्गे केवलमिन्द्रवंशाभिधं छन्दः, "स्यादिन्द्रवंशा ततजैरसंयुतैः, इति लक्षणसद्भावात् । अन्तिमे वृत्तत्रये प्रथमं मालिनीवृत्तम्, द्वितीयं मन्दाक्रान्तावृत्तं, तयोर्लक्षणं तु प्रागुक्तम् । तृतीयं तु स्रग्धरावृत्तम्, तल्लक्षणं यथा–"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति ॥ ८२ ॥

. . . . . . . . . . . . . . . . . . . . . . .

इतीति सकलं प्रकटम्

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाऽभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां दशमः सर्गोऽर्थतः समर्थितः ॥



अर्हम्

# अथैकादशः सर्गः ।

अथैकादशः सर्गः समारभ्यते, अस्मिन् सर्गे पूर्वं नवमसर्ग-निर्मितवर्णनानां भट्टारकश्रीहीरविजयसूरिचरणानां कियच्चरितं रचयति–

मेवातदेशादथ मारवक्ष्मा-
लोलेक्षणालङ्करणीभवन्तः ।
अभ्याययुः श्रीगुरुहीरपादा
देशं सलक्ष्मीकसपादलक्षम् ॥ १ ॥

अथ मेवातदेशात् क्रमेणोग्रसेनपुरे, फतेपुरे, अभिरामावादे, पुनरुग्रसेनपुरे च, इति चतुर्मासकचतुष्टयं विधाय ततश्चलन्तः पुनर्मारवक्ष्मालोलेक्षणाया मरुस्थलीभूमिभामिन्या अलङ्करणीभवन्तः सन्तः, श्रीगुरुहीरपादाः पूज्यश्रीहीरविजयसूरयः, श्रीफलवर्धिपार्श्वनाथयात्रां कृत्वा, सलक्ष्मीकः सश्रीको यः सपादलक्षो नामा नागपुरनगरालङ्कृतो देशस्तं सलक्ष्मीकसपादलक्षं देशं, अभ्याययुरागतवन्त इति ॥ १ ॥

गङ्गाप्रवाहः किमु तापहारी
कल्पद्रुमः किं सकलोपकारी ? ।
श्रीसूरिसिंहः समुपागतोऽसा-
वज्ञायि देशेऽत्र समस्तलोकैः ॥ २ ॥

श्रीसूरिसिंहः, किं०, तापहारी, ततः किं०, गङ्गाप्रवाहः, पुनः किं०, सकललोकानामुपकारी, ततः किं०, कल्पद्रुम इति,

असौ गुरुः, अत्र देशे सवालखनामके देशे, समुपागतः सन्, समस्तलोकैरज्ञायि मेने ॥ २ ॥

आश्चर्यचर्याव्रजवर्यवीर्यै-
भूयोभिरुत्साहभृदुत्सवौघैः ।
उल्लासवत्यां पुरि नागपुर्या
चक्रुश्चतुर्मासमृषीशमुख्याः ॥ ३ ॥

आश्चर्यचर्याव्रजस्याऽद्भुतोपलक्षितगमनस्य वर्यं वीर्यं सामर्थ्यं येभ्यस्तैः, पुनः, भूयोभिः बहुभिः, उत्साहभृतां महाजनानामुत्सवौघैः, उल्लासवत्यां नागपुर्यां पुरि नागोरनाम्नि नगरे, ऋषीशमुख्यास्ते पूज्याश्चतुर्मासं चक्रुरिति ॥ ३ ॥

चित्तं चतुर्मासकपारणे श्री-
सूरेर्जगल्लोकहितार्थमिच्छोः ।
सज्जं सुहृज्जन्तुकगूर्जरत्रा-
धात्रीपवित्रीकरणार्थमासीत् ॥ ४ ॥

अथ तच्चतुर्मासकपारणे जाते सति, श्रीसूरेः, किं०, जगल्लोकहितार्थमिच्छोः जगज्जनानुकूल्याभिलाषिणः, चित्तं मनः, सज्जमुत्सुकं, आसीत् । किमर्थमित्याह–सुहृदः सस्नेहा जन्तवो लोका यत्र सा स्वार्थिके कप्रत्यये सुहृज्जन्तुका सश्रद्धलोका या गूर्जरत्राधात्री गूर्जरधरा तस्याः पवित्रीकरणार्थमित्यर्थः ॥४॥

पुण्यात्मिकाभिर्वरदेशनाभि-
रद्भिस्तडित्त्वानिव नुन्नतापः ।
वृद्धिं नयन्नध्वनि बोधिबीजा-
ङ्कूरानघासञ्जनसज्जनानाम् ॥ ५ ॥

विध्वंसयन् ध्वान्तमथाऽर्यमेव
जाड्यं हरन्नान्तरमङ्गभाजाम् ।
उद्बोधयन् भव्यपयोजपुञ्जान्
श्रीहीरसूरिर्विजहार भूमौ ॥ ६ ॥

श्रीहीरसूरिः, किं०, तडित्त्वानिव मेघ इव, अद्भिः पानीयैः, पुण्यात्मिकाभिः पवित्राभिः, सुक्तदेशनाभिः नुन्नस्तापो मेघपक्षे ग्रीष्मकालजन्माऽऽतपो येन, गुरुपक्षे कषायादितापो येन सः, पुनः, अध्वनि मार्गे, मेडतादौ, अघे पापे असज्जना दुर्जना इवाऽघासज्जनाः पापप्रणाशकाः अघासज्जनास्ते च सज्जनाः सुहृज्जना- अर्थात् सम्यग्दृशस्तेषां, बोधिबीजाङ्कूरान् वृद्धिं नयन् ॥५॥ पुनः, अर्यमेव सूर्य इव, ध्वान्तं पापरूपं विध्वंसयन्, पुनः, अर्यमेव,अङ्गभाजां जन्तूनां जाड्यं हरन्, पुनः, भव्यपयोजपुञ्जान् संघलोकसरोजव्रजान्, उद्बोधयन् प्रतिबोधयन्, क्रमेण मरुकल्पतरुबिरुदधारकसुश्रावकसा०– ताह्लाख्यमहाग्रहेण पींपाडनगरादौ मरुभूमौ, विजहार व्यहार्षीत् । इति युग्मव्याख्या ॥६॥

श्रीमत्सुधर्मप्रभुपादपद्म-
सेवाषडंह्रीन् सुभगानुभावान् ।
आगच्छतः श्रीगुरुहीरसूरीन्
जम्बूकुमारानिव नुन्नमारान् ॥ ७ ॥

आकर्ण्य कर्णैकसुधायमान-
नाम्नः सुधाम्नः प्रसरन्महिम्नः ।
आचार्यधुर्योऽजनि धैर्यवर्य-
उत्साहवानच्छमनाः प्रणत्यै ॥ ८ ॥

श्रीहीरसूरीन्, किं०, जम्बूकुमारानिव, किं०, श्रीमान् यः सुष्ठु शोभनो धर्मः सुधर्मः सर्वज्ञोपज्ञश्रमणमार्गरूपः स एव प्रभुः स्वामी तत्पादपद्मसेवायां, जम्बूपक्षे श्रीमान् यः सुधर्मप्रभुः श्रीवीरपञ्चमगणभृत् तत्पादपद्मसेवायां, षडंह्रीन् भ्रमरान्, पुनः किं०, सुभगोऽनुभावो येषां तान् सौभाग्यमयान्, पुनः किं०, नुन्नमारान् निरस्तकन्दर्पान्, अत एव श्रीजम्बूस्वामितुल्यान् ॥७॥ श्रीगुरुहीरसूरीनागच्छतो नागपुराद् गूर्जरत्रां प्रत्यागमिष्यतः, आकर्ण्य श्रुत्वा, किं०, कर्णैकसुधायमाननाम्नः श्रोत्रामृतसमानाऽभिधानान्, पुनः किं०, सुधाम्नः सुप्रतापान्, पुनः किं०, प्रसरन्महिम्नः विस्तीर्णमाहात्म्यान्, आचार्यधुर्यः श्रीविजयसेनसूरिः, किं०, धैर्येण वर्यः, पुनः किं०, अच्छमनाश्चोक्षचेताः, प्रणत्यै श्रीहीरगुरुप्रणमनाय, उत्साहवानजनि उत्कण्ठाभृदभूत् । इदं युग्मव्याख्यानम् ॥ ८ ॥

संसेव्यमानः सकलर्षिमुख्यैः
श्रीसङ्घसङ्कल्पनकल्पकल्पः ।
आचार्यवर्यः शिवपुर्यहार्य-
धैर्याननंसीदथ हीरसूरीन् ॥ ९ ॥

अथ गूर्जरदेशतश्चलन् आचार्यवर्यः, किं०, सकलर्षिमुख्यैः संसेव्यमानः, पुनः, श्रीसङ्घस्य सङ्कल्पनानि मनोऽभिलाषास्तत्र कल्पकल्पः सुरद्रुमसमः, तत्पूरकत्वात्, अथ शिवपुरि सीरोहीनगर्यां, हीरसूरीन्, किं०, अहार्यधैर्यान् अजेयपराक्रमान्, अनंसीत् प्राणमत् ॥ ९ ॥

द्वौ सङ्गतौ तत्र पुरेऽन्वभूतां
शोभामनूचानगणाधिराजौ ।
गाम्भीर्यसारौ गुणरत्नवारौ

पूर्वापरौ नीरनिधी इवेमौ ॥ १० ॥

तत्र पुरे सीरोहीनगरे, द्वौ अनूचानगणाधिराजौ आचार्य-भट्टारकौ, सङ्गतौ मिलितौ सन्तौ, शोभामन्वभूताम् । इवोत्प्रेक्ष्यते—इमौ पूर्वापरौ प्राचीप्रतीचीसत्कौ, नीरनिधी समुद्रौ, कि०, गाम्भीर्येण सारौ, पुनः, गुणरत्नानां वारः समूहो ययोस्तौ ॥१०॥

छायाभूतौ कान्तियुतौ हरन्तौ
स्तोमैर्गवां तामसमोघमुच्चैः ।
भट्टारकाचार्यवरावभातां
द्वौ पुष्पदन्ताविव तत्र पुर्याम् ॥ ११ ॥

तत्र पुर्यां, द्वौ भट्टारकाचार्यवरौ पुष्पदन्ताविव सूर्याचन्द्रमसाविव, अभातां शोभेते स्मेति योगः । कि०, छायाभृतौ शोभाधरौ, पक्षे सूर्यभार्या छाया, चन्द्रस्य छाया प्रतीता, तद्धारिणौ, पुनः, कान्तियुतौ भासंयुतौ, पुनः, गवां वचनानां, पक्षे गवां किरणानां स्तोमैस्तामसमोघं पापव्रातं ध्वान्तव्रातं च हरन्तौ ॥ ११ ॥

धुर्याविमावार्हतशासनैक-
गन्त्र्याः कृते किं विहितौ विधात्रा ? ।
सूरीश्वरौ संगमितौ विलोक्य
लोकैः स्वचित्तान्तरिति व्यचिन्ति ॥ १२ ॥

तौ सूरीश्वरौ संगमितौ मिलितौ, विलोक्य लोकैः स्वचित्तान्तर्मनोऽन्तः, इति व्यचिन्ति । तत् पूर्वार्धेनाह—आर्हतशासनैकगन्त्र्याः कृते जिनशासनरथवाहनाय, किमिमौ विधात्रा धुर्यौ विहितौ कृताविति ॥ १२ ॥

भट्टारकोऽबोधि विनेयमेन-

मत्यन्तमीशं स्वमिवात्मपट्टे ।
पुत्रो मृगेन्द्रस्य मृगेन्द्र एव
यज्जायते तत्किमु चित्रमत्र ? ॥ १३ ॥

एनं विनेयमत्यन्तमीशं गच्छभारनिर्वाहकत्वात् समर्थं, आत्मपट्टे स्वमिव भट्टारको हीरसूरिः, अबोधि ज्ञातवान् । तदेव द्रढयति–मृगेन्द्रस्य सिंहस्य, पुत्रो यद् मृगेन्द्र एव जायते अत्राऽर्थे किमु चित्रं ?, अथवा, अत्र जगति तत्किं चित्रं ? अपि तु नेति ॥ १३ ॥

आसीदनूचानपतेर्महिम्नो
भट्टारकस्थानमुपेयुषः श्रीः ।
स्यादस्य यातस्य गुरोः पदे श्री-
धिष्ण्यस्य यत् सा न हि विस्मयोऽत्र ॥१४॥

अनूचानपतेः, किं०, भट्टारकस्थानं पूज्यपादमूलमुपेयुषः, महिम्नो महत्त्वस्य, श्रीरासीज्जाता । अस्य श्रीधिष्ण्यस्य कमलालयस्याऽऽचार्यस्य, गुरोः पदे यातस्य श्रीहीरगुरुपादमूले प्राप्तस्य, यत् सा श्रीर्भवति, अत्र को विस्मयः ? कोऽपि न हि; यतो गुरुपदान्तिके प्राप्तस्य शिष्यस्य श्रीः स्यादेवेति, पक्षे श्रीधिष्ण्यस्य श्रिया युक्तो यो धिष्ण्यः शुक्रस्तस्य श्रीशुक्रग्रहस्य, गुरोः पदे बृहस्पतेः स्थाने मीनराशौ, यातस्य या श्रीरुच्चत्वलक्षणा स्यात्, तत्र विस्मयः कः ? अपि तु न कोऽपीति । एतदर्थसंवादि काव्यं यथा—

"आगतस्य निजगेहमप्यरेर्गौरवं विदधते महाधियः ।
मीनमात्मसदने समीयुषो भार्गवस्य गुरुरुच्चतां ददौ" ॥१॥

इत्याद्युक्तेः ॥ १४ ॥

भट्टारकाऽऽचार्यपुरन्दराभ्यां
भाति स्म भूयः शिवपुर्यमूभ्याम् ।
पुण्यात्मिकाभ्यां द्युसरित्सतीभ्यां
नित्याऽनघा मूर्तिरिवाऽष्टमूर्तेः ॥ १५ ॥

अमूभ्यां भट्टारकाऽऽचार्यपुरन्दराभ्यां शिवपुरी भूयो भाति स्मेत्यन्वयः । यथा, उत्प्रेक्ष्यते वेति–द्युसरित्सतीभ्यां गङ्गागौरीभ्यां, किं०, पुण्यात्मिकाभ्यां पावनाभ्याम्; अष्टमूर्त्तेः शम्भोः, मूर्तिरिवेति दृष्टान्तोत्प्रेक्षे ॥ १५ ॥

सीरोहिका श्रीनगरी सुतीर्थं
द्वाभ्यां गुरुभ्यामभवत् तदाऽऽभ्याम् ।
क्षोणीव जह्नूष्णमहःसुताभ्या-
मेकत्वभावेन सुसंगताभ्याम् ॥ १६ ॥

तदा आभ्यां द्वाभ्यां गुरुभ्यां, सीरोहिका नगरी सुतीर्थमभवत् । दृष्टान्तोऽत्र–यथा जह्नूष्णमहःसुताभ्यां गङ्गायमुनाभ्यां, किं०, एकत्वं एकीभावस्तस्य भावेन संत्तया संगताभ्यां मिलिताभ्यां, क्षोणी सुतीर्थं स्यात् तथेति ॥ १६ ॥

आज्ञामथ श्रीतपगच्छभर्तु-
रादाय दामेव जगाम शीघ्रम् ।
श्रीस्तम्भतीर्थं नगरं गरीया-
ञ्श्रीमाननूचानमहीमहेन्द्रः ॥ १७ ॥

अथ श्रीतपगच्छभर्तुः श्रीहीरसूरेः, आज्ञां दामेव मालामिवादाय, शिरसेति शेषः। श्रीमान् अनूचानमहीमहेन्द्रः श्रीआचार्यराट्, श्रीस्तम्भतीर्थं नगरं जगाम शिवपुरीतः स्तम्भतीर्थं

प्राप्तवान्, तत्रत्यश्राद्धमुख्यपरीक्षकवजिआराजिआख्यकारिताईत्प्रतिष्ठाकृत्यायेति शेषः ॥ १७ ॥

इतश्च—

अत्युच्छलद्वारिधिवीचिवीथी-

श्रीभ्राजि गन्धारपुरे प्रधाने ।

श्रीमालिवंशेऽथ परीक्षकाणां

मुख्यो महेभ्योऽभवदाह्लणाह्वः ॥ १८ ॥

इतश्चेति पदेनाधिकारान्तररूपां तयोरुत्पत्तिं वर्णयति—अत्युच्छलन्ती या वारिधेः समुद्रस्य वीचिवीथी कल्लोलमाला तत्श्रीभ्राजि तच्छोभाशालिनि, गन्धारपुरे बन्दिरे, श्रीमालिनां वंशे ज्ञातौ, अथ परीक्षकाणां मुख्य आह्लणनामा महेभ्योऽभवत् ॥ १८ ॥

जिष्णोरिवौजस्विभुजो झषाङ्क-

स्तस्यात्मजोऽभूदथ देह्लणाह्वः ।

तस्यापि पुत्रोऽथ मुहस्यभिख्या-

ख्यातः सतां प्रीतिपदं बभूव ॥ १९ ॥

अथ तस्यात्मजो देह्लणनामाऽभूत्। कः कस्येवेत्याह—जिष्णोर्नारायणस्य, झषाङ्को मीनाङ्क इव। किं०, ओजस्विनौ बलिष्ठौ भुजौ यस्य सः, मीनाङ्कपक्षे औजस्विभुज इव, जगज्जेतृत्वादिति। अथ तस्यापि पुत्रो मुहसी इति अभिख्यया ख्यातः मुहस्यभिख्याख्यातः, पुनः किं०, सतां प्रीतिपदं सज्जनानां स्नेहपात्रं बभूव ॥ १९ ॥

सूनुस्तदीयः समराभिधोऽभूत्

तस्याङ्गजन्माऽजनि चाऽर्जुनाह्वः ।

भीमाभिधोऽभूत् तनयश्च तस्य
जाताऽस्य लालूरिति नाम जाया ॥ २० ॥

तदीयः सूनुः समराख्यस्तस्याऽङ्गजन्माऽर्जुनाख्योऽजनि जातः, तस्यार्जुनस्य तनयो भीमाऽऽख्योऽभूत्, अस्य च लालूरितिनाम्नी जाया पत्नी जाता ॥ २० ॥

यद्वज्जयः शक्रपुलोमपुत्र्योः
पुत्रस्तयोः श्रीजसिआभिधोऽभूत् ।
तस्य स्मरस्येव रतिर्बभूव
भार्या सदाऽऽर्या जसमुख्यमादेः ॥ २१ ॥

यद्वद् यथा, शक्रपुलोमपुत्र्योरिन्द्रेन्द्राण्योः, जयो नामा सुतः, तथा तयोः श्रीजसिआख्यः पुत्रोऽभूत्। तस्य भार्या जसमुख्यमादेः जसमादेनाम्नी, बभूव; रतिरिव यथा स्मरस्येवेति दृष्टान्तः ॥ २१ ॥

स्कन्दाऽऽखुयानाविव शम्भुगौर्योः
श्रेष्ठौ तयोर्द्वौ तनयावभूताम् ।
ज्यायान् महेभ्यो वजिआभिधानः
श्रीराजिआह्वश्च ततो लघीयान् ॥ २२ ॥

यथा शम्भुगौर्योरीश्वरपार्वत्योः, स्कन्दाऽऽखुयानौ कार्तिकेयगणेशौ पुत्रौ, तथा तयोर्जसिआजसमादेनाम्नोः, द्वौ तनयावभूताम्। तयोर्नाम्नी प्राह—ज्यायान् वृद्धो वजिआभिधानो महेभ्यः, च पुनर्लघीयान् राजिआह्व इति ॥ २२ ॥

आभ्यां सुताभ्यां मुदमाप पित्रो-
श्चित्तं चिरं चित्तजशोभनाभ्याम् ।

सद्योऽश्विनीभास्करयोरिवर्भु-

भर्तुर्भिषग्भ्यामतिरागवद्भ्याम् ॥ २३ ॥

आभ्यामेताभ्यां, सुताभ्यां किं०, चित्तजः स्मरस्तद्वत् शोभनाभ्याम्, पित्रोर्जननीजनकयोः, चित्तं मुदमाप । दृष्टान्तो यथा–अश्विनीभास्करयोः ऋभुभर्तुः शक्रस्य भिषग्भ्यामश्विनीपुत्राभ्याम्. किं०, अतिरागवद्भ्यां तयोर्भृशं स्नेहित्वादिदं विशेषणम्, स्ववैद्याभ्यां यथाऽश्विनीसूर्ययोश्चित्तं मुदितं तथा ताभ्यां तयोरिति ॥ २३ ॥

ज्येष्ठस्य जाया विमलाऽभिधाऽभू-

दन्यस्य चासीत् कमलाऽभिधाना ।

भ्रात्रोर्मिथः प्रीतिरभूद् वसन्त-

संकल्पयोन्र्योरिव चातिबह्वी ॥ २४ ॥

ज्येष्ठस्य वजिआख्यस्य जाया भार्या विमलाऽऽख्याऽभूत्, अन्यस्य च लघोः कमलाऽऽख्याऽभूत् । च पुनः, तयोर्भ्रात्रोर्वसन्तसङ्कल्पयोन्र्योर्मधुमन्मथयोरिव, मिथः अतिबह्वी प्रीतिरभूदिति ॥ २४ ॥

श्रीचक्रपाणेरिव पुष्पपत्री

ज्येष्ठस्य पुत्रोऽजनि मेघजीति ।

एतः स्म गन्धारपुरादथ द्वौ

बन्धू च खम्भाइतबन्दिरं तौ ॥ २५ ॥

श्रीचक्रपाणेर्नारायणस्य यथा पुष्पपत्री कन्दर्पस्तथा ज्येष्ठस्य वजिआख्यस्य पुत्रो मेघजी इति नामाऽजनि । अथाऽन्यदा गन्धारपुरात् तौ द्वौ बन्धू खम्भाइतबन्दिरं एतः स्म आगतौ ॥ २५ ॥

तत्रापि तावात्मभुजार्जितानां
श्रीणां फलं धर्मनियोजनाख्यम् ।
सम्यक् समीहाविषयं सृजन्तौ
क्षेत्रेषु वित्तं वपतः स्म नित्यम् ॥ २६ ॥

तौ भ्रातरौ, तत्रापि स्तम्भतीर्थे, आत्मभुजार्जितानां स्वहस्तोपार्जितानां, श्रीणां धर्मनियोजनाख्यं धर्मकर्मव्ययकरणलक्षणं, फलं समीहाविषयं सृजन्तौ वाञ्छागोचरीकुर्वन्तौ, सप्तसु नवसु वा क्षेत्रेषु, वित्तं वपतः स्मेति ॥ २६ ॥

त्यागैः सरागैः सुकृतप्रियेषु
पात्रेषु दीनेषु दयात्मभिश्च ।
आसीत् प्रसिद्धिः प्रथमा नगर्यां
तस्यां तयोर्बान्धवयोश्च बह्वी ॥ २७ ॥

सुकृतप्रियेषु पुण्यात्मसु, पात्रेषु त्यागैर्दानैः, किं०, सरागैर्धर्मरागयुक्तैर्भक्तिदानैरिति, च पुनः, दीनेषु जनेषु दयाऽऽत्मभिर्दयादानैरिति, तस्यां नगर्यां त्रम्बावत्यां, तयोर्बान्धवयोः प्रसिद्धिः ख्यातिः, किं०, बह्वी, अत एव प्रथमा मुख्या, आसीत् ॥ २७ ॥

ख्यातिर्भुवो भर्तुरकब्बरस्य
पर्षन्मृगाक्षीस्तनहारिहारः ।
जज्ञे पयोधौ च तयोः फरङ्ग-
देशेशसंसल्ललनाललाम ॥ २८ ॥

तयोर्भ्रात्रोः, अकब्बरस्य भुवो भर्तुर्भूपतेः श्रीअकब्बरशाहेः, पर्षन्मृगाक्षीस्तनेषु हारी मनोहरो हारस्तत्तुल्या ख्यातिरभूत्, च

पुनः, फरङ्गदेशेशस्य परतकालपातिशाहेः संसल्ललनायाः सभाभामिन्याः, ललाम तत्तुल्या ख्यातिरभूत्; एतावता कोऽर्थः ?, स्थलपथे श्रीअकब्बरपातिशाहिसभायां, पयोधौ जलपथे फरङ्गीश्वरपर्षदि, तयोः प्रसिद्धिर्जातेति ॥ २८ ॥

संसारनीराकरकुम्भजन्मा
धर्मस्तथाऽऽभ्यां बहु मन्यते स्म ।
हन्ति स्म शत्रू अपि नैष जातु
भ्रात्रोस्तयोरत्र यथाऽर्थकामौ ॥ २९ ॥

आभ्यां भ्रातृभ्यां, संसारनीराकरे भवार्णवे, कुम्भजन्माऽगस्तिस्तच्छोषकत्वात् भवार्णवशोषकृद् धर्मस्तथा बहु मन्यते स्म यथा तयोर्भ्रात्रोरर्थकामौ एष धर्मो न हन्ति स्म, कथं, जातु कदाचिदपि, अर्थकामौ किं०, शत्रू अपि विरोधिनावपि; एतावता तयोस्त्रयोऽपि पुरुषार्थाः स्वाधीना इति सूचितम् ॥ २९ ॥

रूपेण दस्राविव पुष्पकाल-
कामाविव स्निग्धतया हताघौ ।
द्वौ भ्रातरौ श्रीसुमनोऽभिरामौ
हृद् जह्रतुस्तौ युगपज्जनानाम् ॥ ३० ॥

तौ हताऽघौ गतपापौ, द्वौ भ्रातरौ रूपेण दस्राविवाश्विनीनन्दनाविव, पुनः, पुष्पकालकामाविव स्निग्धतया सस्नेहत्वेन वसन्तस्मराविव, यतः किं०, श्रीसुमनोभिरामौ श्रिया युक्तैः सुमनोभिः पुष्पैर्वसन्तस्य सर्वस्वरूपैः कामस्य च शस्त्ररूपैरभिरामौ मनोज्ञौ दस्रौ, किं०, सुमनोभिस्सुरैरिति, तौ किं०, श्रीमत्सज्जनैः श्रीमत्पण्डितैश्चाभिरामौ जनानां हृद् जह्रतुरिति ॥ ३० ॥

श्रीहीरसूरीश्वरपट्टभानो-
गोभिर्गुरोः फुल्लमनःपयोजौ ।
अन्येद्युरित्थं सहजौ महेभ्यौ
तौ चिन्तयाञ्चक्रतुरात्मचित्ते ॥ ३१ ॥

गुरोः, किं०, श्रीहीरसूरीश्वरपट्टे भानोस्तदुद्द्योतकत्वात्, गोभिर्वाग्भिर्मयूखैश्च, फुल्लं विनिद्रं मनःपयोजं ययोस्तौ, तौ सहजौ सोदरौ, महेभ्यौ अन्येद्युरेकदा, आत्मचित्ते चिन्तयाञ्चक्रतुरिति ॥ ३१ ॥

चैत्यप्रतिष्ठाप्रतिमादिपुण्य-
क्षेत्रेषु बीजं धनरूपमुप्तम् ।
सूत्वा यशःपुञ्जपरागिपुष्पं
सद्यो महानन्दफलं प्रसूते ॥ ३२ ॥

चैत्यप्रतिष्ठाप्रतिमादिपुण्यक्षेत्रेषु जिनभवनाबिम्बस्थापनाऽर्हत्प्रतिमाप्रमुखसप्तक्षेत्रेषु, धनबीजमुप्तं सत् यशःपुञ्ज एव परागो यस्मिस्तद् यशःपुष्पं सूत्वा प्रसूय, महानन्दफलं मुक्तिफलं, प्रसूते ॥ ३२ ॥

चैत्यं प्रतिष्ठा प्रतिमाऽर्हतां यत्
त्यागश्च पात्रेषु विधीयते यत् ।
संपत्करस्याऽऽत्मभुजार्जितस्य
नित्यं निधिक्ष्मा भणितेयमेव ॥३३॥

च पुनः, चैत्यं जिनौकः, पुनस्तत्प्रतिष्ठा, पुनरर्हतां प्रतिमा, च पुनः, पात्रेषु साधुसाध्वीश्राद्धश्राद्धीरूपेषु, यत् त्यागो विधीयते

आत्मभुजोपार्जितस्य संपद्भरस्य लक्ष्मीसमूहस्य, निधिक्ष्मा निधानोर्वी धनन्यासार्हस्थानभूरिति, इयमेव भणितेति भावः॥३३॥

मत्वेति चित्तान्तरुदात्तचित्तौ
तौ तत्र पुर्यां प्रथितात्मवित्तौ ।
सज्जौ सलज्जौ सहजौ महोभि-
र्जातौ ततः कारयितुं प्रतिष्ठाम् ॥ ३४ ॥

इति चित्तान्तर्मत्वा, तौ किं०, उदात्तचित्तौ उदारमानसौ, पुनः किं०, तत्र पुर्यां त्रम्बावत्यां, प्रथितात्मवित्तौ प्रथितस्वधनौ, अथवा प्रथितात्मसु ख्यातिमत्सु वित्तौ ख्यातौ, पुनस्तौ सहजौ भ्रातरौ किं०, सलज्जौ, ततः कारणात् प्रतिष्ठां कारयितुं सज्जौ जातौ, महोभिरुत्सवैरिति ॥ ३४ ॥

अथ दशभिः काव्यैः प्रतिष्ठोत्सवं वर्णयति–

दानान्यदीयन्त यथार्थमर्थि-
सार्थाय ताभ्यां धनकाञ्चनानि ।
शीघ्रं यथेमौ स्वसुवर्णरूपौ
श्रीदस्वरद्री दरितौ स्वनाशात् ॥ ३५ ॥

ताभ्यां भ्रातृभ्यां, अर्थिसार्थाय याचकनिकराय, यथार्थं अर्थस्य प्रयोजनस्याऽनतिक्रमेण यथार्थं यथेच्छम्, तथा धनकाञ्चनानि दानानि स्वसुवर्णदानानि, अदीयन्त दत्तानीति, यथा इमौ श्रीदस्वरद्री धनदमेरू, किं०, स्वसुवर्णरूपौ धनकनकमयौ, स्वनाशादात्मनाशाद्, दरितौ चकितौ, दूरे प्रनष्टाविति गम्यम् ॥३५॥

नानाऽन्नपक्वान्नभरैर्जनौघा-
आभ्यामभोज्यन्त तथा यथेच्छम् ।

तेषां यथा स्वर्द्रुमयुग्मधर्मि-
वीक्षासमीहा शिथिलीबभूव ॥ ३६ ॥

आभ्यां नानाऽन्नपक्वान्नभरैस्तथा यथेच्छं जनौघा अभोज्यन्त भोजिताः, यथा तेषां भोज्यकृतां, स्वर्द्रुमयुग्मधर्मिवीक्षायाः समीहा कल्पवृक्षयुगलिकादिदृक्षा, शिथिलीबभूवेति ॥ ३६ ॥

दिव्यैर्दुकूलैः परिधाप्यते स्म
संघस्तथाऽऽभ्यां च सहोदराभ्याम् ।
व्यापारवृत्तिर्वसनैकमूला
मन्दा यथाऽजायत दौष्यिकाणाम् ॥ ३७ ॥

च पुनः, तथाऽऽभ्यां सहोदराभ्यां दिव्यैर्दुकूलैः संघः परिधाप्यते स्म, यथा दौष्यिकाणां वस्त्रव्यापारिणां, वसनैकमूला व्यापारवृत्तिर्वस्त्रव्यापारा जीविका, मन्दा जातेति॥३७॥

पौराय तस्यां पुरि दीयते स्म
ताभ्यां तदा श्रीफलपङ्क्तिरिद्धा ।
पूर्वापराभ्यां सलिलेश्वराभ्यां
पीयूषपूर्णा कलसाऽऽवलीव ॥ ३८ ॥

पुनः, तस्यां पुरि पौराय पुरीलोकाय, तदा तत्रोत्सवे, ताभ्यामिद्धा दीप्ता, श्रीफलानां लोकभाषया नालिकेराणां पङ्क्तिः श्रेणिः, दीयते स्म दत्ता। उत्प्रेक्ष्यते—पूर्वापराभ्यां सलिलेश्वराभ्यां समुद्राभ्यां, पीयूषपूर्णाऽमृतभरिता, कलसाऽऽवलीवेति ॥ ३८ ॥

सौधे तयोर्मङ्गलमञ्जुलानि
गीतान्यगीयन्त च गायनौघैः ।

किं पुष्पकालावनिपालराज्ये
पुंस्कोकिलैरूर्जितकूजितानि ? ॥ ३९ ॥

पुनः, तयोः सौधे मङ्गलमञ्जुलानि कल्याणकारीणि, गीतानि गायनौघैरगीयन्त गानविषयीकृतानि । किमित्युत्प्रेक्षायाम्—पुष्पकालावनिपालस्य वसन्तभूपते राज्ये पुंस्कोकिलैः कोकिलवरैः, ऊर्जितानि दीप्तानि कूजितानि गीतानीति ॥ ३९ ॥

सत्कारपात्रास्तिकशस्तमेतद्-
गेहं महामण्डपमञ्जु रेजे ।
मुक्ताफलश्रेणिलतावितान-
रम्याऽमराढ्या मघवत्सभेव ॥ ४० ॥

पुनः, एतयोर्गेहमेतद्गेहम्, किं०, सत्काराणां तत्प्रदत्तस्वर्णमौक्तिकमुद्रिकादीनां पात्रीभूता ये आस्तिकाः साधर्मिकश्रद्धालवस्तैः शस्तं श्लाघ्यम्, पुनर्महामण्डपेन मञ्जु रम्यं, रेजे रराज। इवोत्प्रेक्ष्यते—मुक्ताफलानां श्रेणिभिः पुनस्तेषामेव लताभिः, पुनस्तेषां वितानैर्मुक्ताफलश्रेणिभिर्मुक्ताफललताभिर्मुक्ताफलवितानैश्च हारविशेषै रम्या मनोहरा येऽमरा देवास्तैराढ्या, मघवत्सभेव सुधर्मेवेति ॥ ४० ॥

इत्यादिभिर्भूरिभिरुत्सवैस्त-
द्गेहं जगाहे बहुमञ्जिमानम् ।
वाताभिघाताद् बहलीभवद्भि-
स्तुङ्गैस्तरङ्गैर्जलधेरिवाम्भः ॥ ४१ ॥

इत्यादिभिर्यावर्णितलक्षणैरुत्सवैः तयोर्गेहं तद्गेहं, बहुमञ्जिमानं भूरिरामणीयकं, जगाहे मनोज्ञतामापेत्यर्थः । यथा—

